प्रकारेण हि भेदमते अविनाभावो व्यवस्थितः । न चान्यव्यावृत्तेः केनचित्सह तादात्म्यतदुत्पत्ती घटेते । तथाहि–अकृतकत्वव्यावृत्तिः कृतकत्वम्, तत् स्वलक्षणात्मकम्, नित्यव्यावृत्तिरूपाऽनित्यत्वात्मकं वा स्यात् ? न तावत्स्वलक्षणात्मकम्, अवस्तुरूपत्वात्, यदवस्तुरूपं न तत् स्वलक्षणात्मकं यथा खरविषाणम्, अवस्तुरूपञ्च अकृतकत्वव्यावृत्तिरूपतया कृतकत्वमिति । नापि नित्यव्यावृत्तिरूपाऽनित्यत्वात्मकम्, उभयोः नीरूपतया तादात्म्यसम्बन्धाभावात् । ययोः नीरूपत्वं न तयोस्तादात्म्यसम्बन्धः यथा खपुष्पवन्ध्यासुतयोः, नीरूपत्वञ्च अन्यव्यावृत्तिरूपयोः कृतकत्वानित्यत्वयोरिति । तन्नानयोस्तादात्म्यं घटते । नापि तदुत्पत्तिः, नीरूपत्वादेव । तथाहि–यन्नीरूपं तन्न कस्यचिज्जन्यं जनकं वा यथा खरविषाणम्, नीरूपञ्च साध्यसाधनत्वेनाऽभिप्रेतं प्रकृतमन्यापोहद्वयमिति ।

ननु चार्थाभावेऽपि अर्थाकारं यत् प्रतिबिम्बमुत्पन्नं तदेवान्यापोहः, स च स्वसंवेदनप्रत्यक्षत एव सिद्ध्यति, इत्यनर्थकं तत्रानुमानम्, इत्यप्यसमीक्षिताभिधानम्, ज्ञानेऽर्थाकारधारित्वस्य तन्निराकारत्वसिद्धौ[6] प्रतिषिद्धत्वात् ।

अस्तु वा तत्, तथापि–अत्र कस्य प्रतिबिम्बनम्–स्वलक्षणस्य, सामान्यस्य वा ? न तावत्स्वलक्षणस्य, तस्य व्यावृत्ताकारत्वात् । अनुगतैकरूपञ्च प्रतिबिम्बम् अन्यापोहोऽभिप्रेतः, अतः स्वलक्षणेनापि तथाविधेनैव भवितव्यम् । तथाहि–यस्य हि यदाकारं प्रतिबिम्बं तत् स्वयमपि तदाकारमेव यथा मुखचन्द्रादि, अनुगतैकाकारञ्च स्वलक्षणस्य ज्ञाने प्रतिबिम्बमिति । अथ सामान्यस्य ज्ञाने प्रतिबिम्बनमिष्यते, तदप्यसत्, तस्याऽसतः प्रतिबिम्बनानुपपत्तेः । यदसन्न तत् क्वचित् प्रतिबिम्बति यथा खपुष्पम्, असच्च भवन्मते सामान्यमिति । तत्र तत्प्रतिबिम्बाभ्युपगमे वा प्रतिबिम्बोदयात्प्राग् योन्यविविक्ततद्द्वयोपलम्भप्रसङ्गः । येन यत् प्रतिबिम्बति तद्द्वयं प्रतिबिम्बोदयात्प्राग् योन्यविविक्तमुपलभ्यते यथा मुखादर्शादि, प्रतिबिम्बति च ज्ञाने सामान्याकार इति ।

अथ यादृच्छिकेनार्थक्रियाकारितया स्वलक्षणमेवानुवृत्ताकारं मतं सामान्यम्, अतो नोक्तदोषावकाशः, तदयुक्तम्, एकार्थक्रियामकुर्वतस्तत्कारित्वाभावतः प्रतिबिम्बो-

(१) सौगतसिद्धान्तः । (२) अकृतकत्वव्यावृत्तिरूपं कृतकत्वं न स्वलक्षणात्मकम् अवस्तुरूपत्वात् । (३) अकृतकत्वव्यावृत्तिरूपकृतकत्व नित्यत्वव्यावृत्तिरूपाऽनित्यत्वयोश्च । (४) अन्यव्यावृत्तिरूपयोः कृतकत्वानित्यत्वयोः तादात्म्यं न भवति नीरूपत्वात् । (५) कृतकत्वमनित्यत्वञ्च–आ० टि० । (६) पृ० १६७ । (७) प्रतिबिम्बम् । (८) अनुगतरूपेण । (९) स्वलक्षणमनुगतैकाकारम् अनुगतैकाकाररूपेण प्रतिबिम्बितत्वात् । (१०) सामान्यस्य अन्यापोहात्मकत्वेन अर्थक्रियाकारित्वाभावेन असत्त्वम् । (११) न सामान्यं ज्ञाने प्रतिबिम्बति असत्त्वात् । (१२) बौद्धमते । (१३) ज्ञाने । (१४) सामान्ये । (१५) प्रतिबिम्बाधारस्य ज्ञानस्य प्रतिबिम्ब्यस्य च सामान्यस्य विविक्तं स्वरूपद्वयं प्रतिभासेत इति भावः । (१६) ज्ञानं सामान्यञ्च विभिन्नतया उपलभ्यताम् तत्र प्रतिबिम्ब्यमानत्वात् । (१७) प्रतिबिम्बाभावलक्षणो दोषः । (१८) सामान्यस्य ।

1–कः तयोः श्र० । 2 ननु चार्थाकारं आ० । 3 इत्यसमी–श्र० । 4 'तस्य' नास्ति आ० । 5–तत्र यस्य यस्य हि आ०, श्र० । 6–विविक्ततद्द्वय–ब० । 7–बिम्बते श्र० । 8–बिम्बते च श्र० ।

तद्धर्मान् बहुभारोद्वहनादीन् वाहीके निश्चित्य गोत्वमारोपयति 'गौर्वाहीकः[1]' इति। अथोभयग्रहणे सति आरोपः स्यात्, ननु[2] उभयोर्ग्रहणं विकल्पेन, निर्विकल्पेन वा स्यात्? न तावन्निर्विकल्पेन, अस्य[3] स्वलक्षणगोचरतया अन्यापोहस्वरूपविकल्पाकारे प्रवृत्त्यनुपपत्तेः। नापि विकल्पेन, अस्य[4] बाह्यार्थपरामर्शपराङ्मुखत्वात्[1], अतः कथमसौ[5] स्वाकारे बाह्यं तत्र[6] वा स्वाकारमारोपयेत्?

अस्तु वाऽस्योभयग्रहणम्, तथापि[7]–पूर्वं स्वप्रतिभासमनर्थमनुभूय पश्चादर्थमारोपयति, युगपदेव वा स्वप्रतिभासञ्चानुभवति[2] अर्थञ्च समारोपयति, किं वा यावदयोक्तं भवति–स्वाकारमनुभवतीति तावदेवोक्तं भवति अर्थमध्यवस्यतीति[8]? न तावत्स्वरूपानुभवः[3] पूर्वं पश्चादर्थसमारोपः, क्षणद्वयावस्थानविकलत्वाज्ज्ञानानाम्, अन्यथा क्षणभङ्गभङ्गप्रसङ्गः[4]। अथ युगपदेव स्वप्रतिभासमनुभवति अर्थञ्च समारोपयति, तर्हि[9] ग्राह्यग्राहकाकारात्मके विकल्पस्वरूपे संवेद्यमाने स्वानुभवसमानकाल एवार्थः समारोप्यमाणो विकल्पस्वरूपाद् बहिरेवाऽवतिष्ठते तत्कथमात्मानमनर्थम्[10] अर्थमारोपयेदसौ? अथ स्वाकारानुभव एव अर्थसमारोपः, तदप्यसुन्दरम्, अनुभवितव्यविकल्पयितव्ययोर्भेदात्। शब्दसंसृष्टं हि स्वरूपं विकल्पयितव्यम्, अशब्दसंसृष्टं तु स्वसंवेदनेनानुभवितव्यम्, तत्कथमनयोरेकत्वम्?

एतेन 'हृदयविकल्प्यानेनीकृत्य बहीरूपतयाऽध्यस्तः' इत्यादि प्रत्युक्तम्[11], तदुक्ती-

(१) "जनिका नाम वाहीकास्तेषां वृत्तं सुनिश्चितम्।"–महाभार० कर्णपर्व अ० २०० । "गौर्वाहीक इति भाष्यायाम्। यथा गोरन्यस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः।"–महाभा० प्र० १।१।१५। (२) तुलना– "न खलु विकल्पमेव दृश्यमित्यध्यवस्यति। विकल्प एवमिति चेत् न तत्र सामान्यावभासात् अन्यथा विकल्पत्वायोगात्। अन्य इति चेत् न आत्मवान्यापत्तेः तत्तथाध्यवसायनिमित्ताभावाच्च।"–अनेकान्तजय० प० ३५ B। "न च वाध्यवसायोऽपि दृश्यं स्पृशति जातुचित्। विकल्पस्यान्यथा सिद्धयेत् दृश्यस्पर्शित्वमञ्जसा।"–तत्त्वार्थश्लो० पृ० १०९। "तत्रैतस्य हि दर्शनमध्यवस्यति तत्पृष्ठजो व्यवसायो ज्ञानान्तरं वा।"–प्रमाणप० पृ० ५३। प्रमेयक० पृ० ३१। सन्मति० टी० पृ० ५००। स्या० र० पृ० ८२। (३) निर्विकल्पस्य। (४) अवस्तुविषयत्वात्–आ० टि०। (५) विकल्पः। (६) बाह्यार्थे। (७) तुलना– "न च स्वाकारमनर्थमर्थं आरोपयति। न तावदगृहीतं स्वाकारं गत्वा आरोपयितुमिति तद्ग्रहमपि नव्यम्। तत्किं गृहीत्वा आरोपयति, अथ यदेव गृह्णाति तदेवारोपयति। न तावत्पूर्वः पक्षः न हि विकल्पज्ञानं क्षणिकं क्रमवतो ग्रहणसमारोपौ कर्तुमर्हति। उत्तरस्मिंस्तु पक्षे विकल्पस्वसंवेदनप्रत्यक्षाद्विकल्पाकाराहङ्कारास्पदाद् अनहङ्कारास्पदं समारोप्यमाणो विकल्पो भासगोचरो न शक्योऽभिन्नः प्रतिपत्तुम्। नापि बाह्यस्वलक्षणत्वेन शक्यः प्रतिपत्तुं विकल्पेनानन स्वलक्षणस्य बाह्यस्याप्रतिभासनात्।"–न्यायवा० ता० पृ० ४८५। (८) स्वाकारानुभवनमेव अर्थाध्यवसाय इति भावः। (९) यदि यदेव विकल्पाकारं स्वप्रतिभासमनर्थमनुभवति तदेवार्थं समारोपयति, तदा विकल्पस्य स्वानुभवव्यापृतत्वात् अर्थो विकल्पाकारमलभमानः तत्स्वरूपाद् बहिरेवास्ते विकल्पो न सङ्क्रामति, तत्कथमात्मनि अनर्थभूते अर्थं विकल्पाकारं आरोपयतीति तात्पर्यम्।–आ० टि०। (१०) आत्मनि अनर्थे न्यर्थं। (११) पृ० ५५० प० ५।

1–परामर्शपराङ्मुखत्वात् श्र०। 2 पूर्वं प्रतिभासमानार्थमनु–श्र०। 3–भास वानुभ–ब०। 4–भंगभंगनाप्रसंग ब०।

लिङ्गभेदः एकद्वित्रिबहुवचनादिभेदश्च दुर्लभः । लिङ्गलिङ्गिभेदश्च दूरोत्सारित एव स्यात्, यदेव हि लिङ्गशब्दस्यान्यापोहमात्रं तदेव लिङ्गिशब्दस्यापि ।

अथापोह्यभेदेनाभ्युपगमान्नायं दोषः, तदयुक्तम्, तस्य भेदेनाऽसिद्धेः । तस्य हि भेदः अपोह्यभेदाद्, वासनाभेदात्, विभिन्नसामग्रीप्रभवत्वात्[1], विभिन्नकार्यकारित्वात्, आश्रयभेदात्, स्वरूपभेदाद्वा स्यात् ? न तावदपोह्यभेदात्, सर्वप्रमेयादिशब्दानाम् अपोह्यभेदाभावतः पर्यायताप्रसङ्गात् । न हि असतः सर्वराशेर्व्यतिरिक्तम्, अप्रमेयं वा किञ्चिदस्ति यदपोहेन सर्वादिः सिद्ध्येत । कथं वा सत्त्वकृतकत्वादिहेतोः सिद्धिः ? न हि असदकृतकं वा जगति किञ्चिदस्ति यदपोहेन सत्त्वादिसाधनं सिद्ध्येत् । अपोह्यभेदादपोहभेदे चान्योन्याश्रयः –सिद्धे ह्यपोह्यभेदे अपोहभेदसिद्धिः, तत्सिद्धौ चापोह्यभेदसिद्धिरिति । तन्नापोह्यभेदादपोहस्य भेदः । नापि वासनाभेदात्, तद्भेदस्याप्यनुपपत्तेः । अनुभवभेदनिबन्धनो हि वासनाभेदः, अपोहस्य चैकरूपत्वे अनुभवभेदो दुर्घटः । नापि विभिन्नसामग्रीप्रभवत्वादपोहभेदः, अस्य कल्पितरूपतया सामग्रीविशेषतः प्रादुर्भावस्यैवाऽनुपपत्तेः । यत् कल्पितरूपं तन्न कुतश्चित्प्रादुर्भवति यथा तुरङ्गमोत्तमाङ्गे शृङ्गम्, कल्पितरूपश्च भवन्मते अपोह इति । ततस्तदुत्पत्तौ वा कल्पितरूपत्वव्याघातः । यत् कुतश्चिदुत्पद्यते तन्न कल्पितरूपं यथा स्वलक्षणम्, उत्पद्यते च सामग्रीविशेषतोऽपोह इति ।

(१) तुलना– "ननु भिन्नापोहानां प्रसङ्गोऽयं न युज्यते । सामान्यापोहवर्गस्य येऽत्र वस्तुमात्रं समं तव ॥ भिद्यन्ते मम वस्तुत्वात्सामान्यानि परस्परम् । असङ्कीर्णस्वभावानि न चैकत्वं विन्दते ॥ समुदायस्वरूपाणाम् अविकल्परहितात्मनाम् । अवस्तुत्वादपोहानां तव स्यात् भिन्नता कथम् ॥" –मी० श्लो० अपोह० श्लो० ४३-४५ । (२) अपोह्यस्य । (३) तुलना–"अन्यापोहश्च शब्दार्थ इत्ययुक्तम्, अव्यापकत्वात् । यत्र द्वैराश्यं भवति तत्रेतरप्रतिषेधादितरः प्रतीयते यथा गौरिति पदे गौः प्रतीयमानः अगौः प्रतिषिध्यमानः । न पुनः सर्वपदे एतदस्ति न ह्यसर्वं नाम किञ्चिदस्ति यत्सर्वपदेन निवर्त्येत ।" –न्यायवा० पृ० ३२९ । "ननु चापोह्यभेदेन भेदोऽपोहस्य सत्स्यति । न विशेषः स्वतस्तस्य परतश्चोपचारिकः ॥ ४७ ॥ प्रमेयत्वाद्यपोह्यस्तु कृत एव तु ।" –मी० श्लो० अपोह० श्लो० ४७, १४४ । प्रमेयक० पृ० ४३४ । प्रमेयर० ३।१०१ । (४) तुलना–"यद्यप्यन्येषु शब्देषु वस्तुनः स्यादपोह्यता । मच्छब्दस्य स्वभावास्यानाऽस्याह भिन्नमिष्यते ॥" –मी० श्लो० अपोह० श्लो० ९८ । (५) तुलना– "अपोह्यभेदकल्पिते च नाभावाऽभेदो भवेत् । तद्भेदोऽपोहभेदाच्चेत् प्राप्तमन्योन्यसंश्रयम् ॥ गोसामान्यं भिन्नत्वाद्गौरित्येष भिद्यते । अगौरित्यस्य च भेदेन गोसामान्यं च भिद्यते ॥" –मी० श्लो० अपोह० श्लो० ६५-६६ । न्यायमं० पृ० ३०४ । (६) तुलना– "नचापि वासनाभेदाद् भेदः सद्रूपतापि वा । अपोहानां प्रकल्प्येत न ह्यवस्तुनि वासना ॥ स्मृतिं मुक्त्वा नचास्त्यस्याः शक्तियोगः क्रियान्तरे । तस्मात्सामान्यबुद्धेः सार्थ्यं करोत्यवादृशीं मतिम् ॥ भवन्मते शब्दभेदोऽपि तन्निमित्तो न लभ्यते ।" –मी० श्लो० अपोह० श्लो० १००-२ । प्रमेयक० पृ० ४३९ । (७) वासनाभेदस्य । (८) अभावरूपतया तुच्छकस्वभावत्वे । (९) अपोहस्य । (१०) अपोहो न कुतश्चित्प्रादुर्भवति कल्पितरूपत्वात् । (११) भवन्मते । (१२) कारणसामग्रीतः अपोहोत्पत्तौ । (१३) अपोहो न कल्पितः कारणादुत्पद्यमानत्वात् ।

1 'विभिन्नसामग्रीप्रभवत्वात्' नास्ति श्र० । 2 –भेदे चापो–ब० श्र० । 3 तद्भेदस्याप्यनुभव –आ० । 4 –त्वादपोहभेदस्य कल्पि–ब० । 5 प्रादुर्भावानुप–श्र० ।

एतेन भिन्नकार्यकारित्वात्तद्भेदः प्रत्याख्यातः, अपरमार्थसतो विभिन्नकार्यकारित्वानुपपत्तेः खपुष्पवत्। तत्कारित्वे वाऽपरमार्थसत्त्वाऽसंभवात् स्वलक्षणवत्। कुतश्च कार्यकारणयोर्भेदः सिद्धो यतः तद्भेदादपोहस्य भेदः सिद्ध्येत्–अपोहभेदात्, स्वरूपतो वा ? अपोहभेदान्नेद्, अन्योन्याश्रय–सिद्धे हि कारणभेदे कार्यभेदे च तत्प्रभवतया तत्कारितया च अपोहभेदसिद्धिः, तत्सिद्धौ च कार्यकारणयोर्भेदसिद्धिरिति। स्वरूपतस्तद्भेदसिद्धौ च अपोहकल्पनाऽनर्थक्यम्।

अथाश्रयभेदादपोहभेदः, तन्न, अवस्तुरूपस्यास्य क्वचिदाश्रितत्वानुपपत्तेः। यदवस्तुरूपं न तत् क्वचिदाश्रितम् यथा गगननलिनम्, अवस्तुरूपश्चापोह इति। आश्रितत्वे वा निस्सौ प्रतिव्यक्ति भिन्नः, अभिन्नो वा स्यात् ? यदि भिन्नः, तदा द्रव्यगुणकर्मणां मध्ये अन्यतमरूपतैवास्याभ्युपगता स्यात्, प्रतिव्यक्त्यन्यस्य आश्रितत्वानुपपत्तेः। अथाभिन्नः, तदा सामान्यरूपतैव नामान्तरेणोक्ता स्यात् इत्युभयथाप्यन्यापोहरूपतानुपपत्तिः।

अथ स्वरूपभेदादपोहस्य भेदः, तन्न, अपरमार्थसत्त्वेऽस्य स्वरूपभेदानुपपत्तेः। यदपरमार्थसन्न तस्य स्वरूपभेदः यथा खपुष्पखरविषाणादेः, अपरमार्थसंश्चापोह इति। स्वरूपभेदे वाऽस्य स्वलक्षणवत् परमार्थसत्त्वप्रसङ्गः।

किञ्च, पर्युदासरूपः, प्रसज्यरूपो वाऽपोहः स्वरूपतो भिन्नः शब्दैरभिधीयेत ? यदि पर्युदासरूपः, तदास्य भावान्तररूपताभ्युपगन्तव्या। भावान्तरञ्च विशेषः, सामान्यम्, तदुपलक्षितो वा विशेषः, तत्समुदायो वा स्यात् इति पक्षचतुष्टयेऽपि विधिरेव शब्दार्थः स्यात् नाऽपोहः। अथ प्रसज्यरूपः, तदा निषेधमात्रमेव शब्दैरभिहितं स्यात्, तथायुक्त

(१) अपोहभेदः। (२) अर्थक्रियाकारित्वे। (३) कार्यभेदात्। (४) भिन्नकारणप्रभवतया। (५) भिन्नकार्यकारितया। (६) कार्यकारणयोः भेदसिद्धौ। (७) तुलना–"तेनवाधारभेदेनाप्यस्य भेदो न युज्यते। न हि सम्बन्धभेदेन भेदो वस्तुन्यपीष्यते। किमुतावस्तुसस्पृष्टमयतश्चानिर्वर्तितम्। अनवाप्तविशेषात्म मतिमप्यनिरूपितम्।"–मी० श्लो० अपोह० श्लो० ४८–४९। (८) अपोहो न क्वचिदाश्रितः अवस्तुरूपत्वात्। (९) अपोहः। (१०) अपोहरूपस्य सामान्यस्य आश्रयभूतानि द्रव्यगुणकर्माण्येव भवितुमर्हन्ति, सामान्यस्य द्रव्यादित्रयवृत्तित्वात्। (११) अपोहस्य। (१२) अपोहस्य। (१३) नापोहस्य स्वरूपभेदः अपरमार्थसत्त्वात्। (१४) अपोहस्य। तुलना–"यद्वा भिद्यमानत्वाद्वस्त्वसाधारणावत्। अवस्तुत्वं त्वनानात्वात्"–मी० श्लो० अपोह० श्लो० ४६। न्यायमं० पृ० ३०४। (१५) "किञ्चापोहाख्यं सामान्यं वाच्यत्वेनाभिधीयमानं पर्युदासलक्षणं वाभिधीयेत प्रसज्यलक्षणं वा ?"–प्रमेयक० पृ० ४३२। प्रमेयर० ३।१०१। (१६) यथा घटः पटात् स्वरूपतो भिन्नः सन् भावान्तरम्–आ० टि०। तुलना–'अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम्। गोत्वं वस्त्वेव तैरुक्तमगोपोहगिरा स्फुटम्॥'–मी० श्लो० अपोह० श्लो० १। प्रमेयक० पृ० ४३२। (१७) तुलना–"नन्वन्यापोहकृच्छब्दो युष्मत्पक्षेऽनुवर्णितः। निषेधमात्रं नैवेह प्रतिभासेऽवगम्यते॥ किन्तु गौर्गवयो हस्ती वृक्ष इत्यादिशब्दतः। विधिरूपावसायेन मतिः शाब्दी प्रवर्तते॥" (पूर्वपक्ष)–तत्त्वसं० का० ९१०–११। प्रमेयक० पृ० ४३२।

1 घापर–ब०। 2 ...रू०। 3 वा श्र०। 4 घास्य ब०। 5–भिधीयते ब०, ज०।

तयाप्रतीत्यभावात् । परप्रतिपादनार्थो हि शब्दप्रयोगः, परश्च नीलार्थी न अनीलनिषेधमात्रं जिज्ञासते, अजिज्ञासितञ्च प्रतिपादयतः प्रतिपादकस्याऽप्रेक्षापूर्वकारित्वप्रसङ्गः ।

निषेधमात्राभिधायित्वे च नीलोत्पलशब्दयोः सामानाधिकरण्यञ्च प्राप्नोति, नीलशब्दो ह्यनीलव्यवच्छेदमात्रे चरितार्थः, उत्पलशब्दोऽपि अनुत्पलव्यवच्छेदमात्रे । न चैतौ व्यवच्छेदौ एकस्मिन् धर्मिणि सम्बद्धौ, भावाभावयोस्तादात्म्यादिसम्बन्धासम्भवात् । नापि तौ शब्दौ एकधर्मिविषयौ, घटपटशब्दयोरिवाऽनयोः एकधर्मिविषयत्वानभ्युपगमात् ।

किञ्च, नञेव पर्युदासवृत्तिः प्रसज्यवृत्तिर्वा भवति, गौरिति च नायं नञ्, अतः कथमगोपर्युदासेन गोशब्दवृत्तिः ? गौरयमिति विधिरूपेणैवास्य प्रवर्त्तमानत्वात् । ततः सामान्यविशेषयात्मा शब्दस्य विषयोऽभ्युपगन्तव्यः अलं प्रतीत्यपलापेन । तस्य च सङ्केतव्यवहारकालानुयायित्वप्रसिद्धेः नेत्थम्भूते स्वलक्षणे सङ्केतकरणवैफल्यम् । सौगतकल्पितस्य तु स्वलक्षणस्य सुगतमतपरीक्षायां प्रपञ्चतः प्रतिक्षिप्तत्वात् तत्र सङ्केतकरणं विफलमेव । अतो यत् 'सङ्केतव्यवहारकालाननुयायी' इत्यादि[11] सिद्धसाधनत्वादुपेक्षणीयम् ।

सम्बन्धश्च वाच्यवाचकयोः ऊहाख्यप्रमाणेन प्रतीयते, सर्वत्र सम्बन्धप्रतीतेस्तदधीनत्वात् । अतः 'अस्येदमभिधानमिति सम्बन्धकारिणि ज्ञाने प्रतिनियतेन्द्रियविषययोः शब्दार्थयोर्न प्रतिभासः' इत्याचार्ययुक्तमुक्तम्, सामान्यविशेषात्मनोरेव शब्दार्थयोः प्रतिनियतेन्द्रियविषयत्वोपपत्तेः, अतः कथं तयोः सङ्केतकारिणि ज्ञाने प्रतिभासाभावः ?

ननु नातीतानागतार्थशब्दानां 'नद्यास्तीरे मोदकराशयः सन्ति' इत्यादिशब्दानाञ्च अर्थाभावेऽपि प्रवृत्तिप्रतीतेः कथमर्थे प्रतिबन्धसिद्धिस्तेषाम् ? इत्यप्यसमीक्षिताभिधानम्,

(१) भिन्ननिमित्तयोः शब्दयोरेकस्मिन्नधिकरणे वृत्तिः सामानाधिकरण्यम् –प्रमाणवा० स्ववृ० टी० १।६४ । तुलना– यस्य चापोहः शब्दार्थस्तेनानीलानुत्पलव्युदासौ कथं समानाधिकरणाविति वक्तव्यम् । यस्य पुनर्विधीयमानः शब्दार्थस्तस्य जातिगुणविशिष्टं नीलोत्पलशब्दाभ्यां द्रव्यमभिधीयते, जातिगुणौ द्रव्ये वर्तेते न पुनरनीलानुत्पलव्युदासौ तस्मात् समानाधिकरणार्थो नास्तीति ।' –न्यायवा० पृ० ३३१ । न्यायमं० पृ० ३०५ । सामानाधिकरण्यञ्च न भिन्नत्वादपोहयोः । अथानश्चनश्चैव न वृत्तिर्न्यायवत्ता तयोः ॥ न चासाधारणं वस्तु गम्यतेऽन्यच्च नास्ति ते । अगम्यमानमैकार्थ्यं शब्दयोः क्वानुगम्यते ॥ –मी० श्लो० अपोह० श्लो० ११८–१९ । अनेकान्तजय० पृ० ४० । प्रमेयक० पृ० ४३६ । (२) धर्मी भावात्मकः अभावात्मकौ च अनीलानुत्पलव्यवच्छेदौ । (३) नीलमुत्पलमिति शब्दौ । (४) सामानाधिकरण्यं हि भिन्नप्रवृत्तिनिमित्तयोः शब्दयोः एकस्मिन्नर्थे वृत्तिः –आ० टि० । (५) सामान्यविशेषात्मनोऽर्थस्य । (६) सामान्यविशेषात्मकं अर्थे । (७) सौगतकल्पितस्य । (८) पृ० ३७९ । (९) क्षणिकस्वलक्षणे । (१०) सङ्केतकरणम् । (११) पृ० ५५२ पं० ९ । (१२) ऊहाख्यप्रमाणाधीनत्वात् । (१३) पृ० ५५३ पं० ४ । (१४) सङ्केतकारिणि । (१५) शब्दानाम् ।

1 जिज्ञासति ब० । 2–विषयो घट–आ० । 3–शब्दप्रवृत्ति ब० श्र० । 4–वाच्य वस–आ० । 5 तदधीन–श्र० । 6 प्रतिबन्धाभावात्–श्र० ।

यतो न वयं सर्वशब्दानामर्थनान्तरीयकत्वं प्रतिपन्नाः । किंतर्हि[1] सुनिश्चिताप्तप्रणेतृकाणामेव । न च केषाञ्चिच्छब्दानामर्थव्यभिचारित्वदर्शनात् सर्वेषां तद्व्यभिचारित्वं युक्तम्, मरीचिकायां जलाद्यवभासिनोऽध्यक्षस्य अप्रामाण्योपलम्भात् सत्यजलाद्यवभासिनोऽप्यस्याऽप्रामाण्यप्रसङ्गात् । मरीचिकायां जलाद्यवभासिन एवास्याऽप्रामाण्यं बाधकसद्भावान्नेतरस्य इत्यन्यत्रापि समानम् । तन्न प्रत्यक्षशब्दयोः परमार्थविषयत्वे कश्चिद्विशेषः ।

अतो निराकृतमेतत्–'य यदेवेन्द्रियग्राह्यम्' इत्यादि । नहि प्रतिभासभेदो विषयभेदं प्रसाधयति, अभिन्नेऽप्यर्थे स्वसामग्रीविशेषात्तद्भेदस्योपपद्यमानत्वात् दूरासन्नार्थोपनिबद्धदृष्टिप्रेक्षकजनवत् । यथैव हि दूरासन्नदेशादिसामग्रीविशेषवशात् पादपादेरभिन्नस्यापि विभिन्नप्रतिभासविषयत्वं तथा शाब्दप्रत्यक्षप्रत्यययोरभिन्नविषयत्वेऽपि शब्देन्द्रियादिसामग्रीभेदाद् अस्पष्टेतरप्रतिभासभेदो न विरोधमध्यास्ते । अत अन्धस्य चक्षुष्मतश्च अभिन्नेऽपि विषये सामग्रीभेदात् प्रतिभासभेदोपपत्तेः अयुक्तमुक्तम्–'शब्दात्प्रत्येति भिन्नाक्षो नतु प्रत्यक्षमीक्षते ।' इति ।

यच्चान्यदुक्तम्–'वाच्यवाचकभावश्च कार्यकारणभावान्नान्य' इत्यादि, तदप्यचारु, यतः सति बुद्धिसम्बन्धिनि प्रतिबिम्बे अस्य शब्दजन्यत्वात् तद्वाच्यत्वं स्यात् शब्दस्य च तज्जनकत्वाद् वाचकत्वम्, न च तदस्ति, प्रागेवास्य प्रपञ्चतः प्रतिषेधात् । यदि च कार्यकारणभाव एव वाच्यवाचकभावः स्यात्, तदा श्रोत्रज्ञाने प्रतिभासमानोऽपि शब्दः

(१) जनाः । तुलना–'न हि वयं सर्वशब्दानां प्रामाण्यं प्रतिपद्येमहि किं तर्हि सुनिश्चिताप्तप्रणेतृकाणामेव । तत्र प्रामाण्यं प्रति प्रत्यक्षशब्दयोर्विशेषमुपलभामहे ।"–न्यायावता० टी० प० ६ । (२) अर्थाविनाभावित्वम् । (३) अनाप्तप्रणेतृकाणाम् । (४) अल्पज्ञानस्य । (५) तुलना–"न च ग्राहकप्रत्यक्षस्मृतिप्रतिभासभेदात् विषयस्वभावभेदाभावः, सद्देशार्थोपनिबद्धदर्शनप्रत्यासन्नेतरपुरुषज्ञानविषयवत् । यथा हि सकृदेकस्मिन्नर्थे पादपादौ उपनिबद्धदर्शनयोः प्रत्यासन्नविप्रकृष्टपुरुषयोर्ज्ञानाभ्यां विषयीकृते स्पष्टास्पष्टप्रतिभासभेदान्न स्वभावभेदः पादपस्य तस्यैकत्वाव्यतिक्रमात्, तथैव ग्राहकयोः प्रत्यक्षस्मृतिप्रतिभासयोः भेदेऽपि स्पष्टमन्दतया न तद्विषयस्य भेदः स्वलक्षणस्यैकस्वभावत्वाभ्युपगमात् ।'–अष्टश०, अष्टसह० पृ० १२४ । 'करणभेदेन प्रतिपत्त्योर्भेदात् । अन्धस्य हि शब्दाद्रूपविषयं विज्ञानमुत्पद्यते न तु चाक्षुषमिति । यस्य चापरोक्षं चाक्षुषं विज्ञानमस्ति असावनन्धः ।–प्रश० व्यो० पृ० ५८६ । स्पष्टास्पष्टाकारतयाऽध्यप्रतिभासभेदश्च सामग्रीभेदान्न विरुध्यते दूरासन्नार्थोपनिबद्धेन्द्रियप्रतिभासवत् ।–प्रमेयक० प० ४४६ । सन्मति० टी० पृ० २५९ । स्या० र० प० ७१५ । (६) प्रतिभासभेदस्य । (७) पृ० ५५३ प० १० । (८) पृ० ५५६ प० १५ । (९) बुद्धिगतप्रतिबिम्बस्य । (१०) इयता कार्यं वाच्यं कारणं वाचकमिति सिद्धम्–आ० टि० । (११) बुद्धौ प्रतिबिम्बम् । (१२) शब्दं निर्विकल्पकप्रत्यक्षस्य कारणम्, 'नाकारणं विषयः' इत्यभ्युपगमात् । तुलना–'यतो यदि कार्यकारणभाव एव वाच्यवाचकभावः स्यात् तदा श्रोत्रज्ञाने प्रतिभासमानः शब्दः स्वप्रतिभासस्य भवत्येव कारणमिति तस्याप्यसौ वाचकः स्यात् । यथा च विकल्पस्य शब्दः कारणम् एवं परम्परया स्वलक्षणमपि अतस्तदपि वाचकं स्यात्'–रत्नाकराव० ४।११ ।

1–ज्ञानप्रतिमा–श्र०, ब० ।

स्वप्रतिभासस्य भवत्येव कारणम् अतस्तस्याप्यसौ वाचकः स्यात्। यथा च विकल्पस्य शब्दः कारणम् एवं पारम्पर्येण स्वलक्षणमपि, अतस्तदपि वाचकं स्यात्। अतः प्रतिनियतवाच्यवाचकभावव्यवस्थाविलोपः स्यात्। ततो यद्यत्र यथा निर्बाधबोधे प्रतिभासते तत्तत्र तथैवाऽभ्युपगन्तव्यम् यथा अन्तर्मुखमाकारात्मकतया, प्रतिभासते च अबाधे शाब्दे प्रत्यये सामान्यविशेषात्मकतया बहिर्घटादिकं वस्त्विति ॥छ॥

शब्दस्य सामान्यमात्रवाचकत्वमिति मीमांसकस्य पूर्वपक्षः – ननु सामान्यविशेषात्मकतया शाब्दप्रत्यये बहिर्घटादिवस्तुनः प्रतिभासमानत्वमसिद्धम्, शब्दानां सामान्यमात्रगोचरचारितया तत्प्रभवप्रत्ययस्य तन्मात्रविषयतया एवोपपत्तेः। सामान्यमात्रमेव हि शब्दानां गोचरः, तस्यैव क्वचित् प्रतिपन्नस्य एकरूपतया सर्वत्र सङ्केतविषय-

(१) स्वप्रतिभासस्य–आ० टि०। (२) कारणं यतो भवत्यनेन वाचकम्। (३) शब्दः स्वलक्षणाच्छब्दग्राहि निर्विकल्पकं तस्माच्च सविकल्पकम् अथवा स्वलक्षणान्निर्विकल्पकं तस्माच्च सविकल्पकमिति। (४) स्वलक्षणमपि कारणत्वाद्वाचकं स्यात्। (५) स्वलक्षणस्यापि वाचकत्वं प्रसक्तं। (६) शाब्दे बोधे सामान्यविशेषात्मकतयैव अर्थः प्रतिभाति तत्र तथैव निर्बाधबोधप्रतीतिविषयत्वात्। (७) तुलना– अनेकमेकञ्च पदस्य वाच्यम्'–वृहत्स्व० श्लो० ४४। 'अनेकमेकात्मकमेव वाच्यं द्वयात्मकं वाचकमप्यवश्यम्।"–अयोगव्य० श्लो० १४। (८) आकृतिस्तु क्रियार्थत्वात् –जैमिनिसू० १।३।३३।– तु शब्दः पक्षान्तरं व्यावर्तयति। आकृतिः शब्दार्थः –शाबरभा० १।३।३३। आकृतिशब्देन जातिरेवाभिप्रेता मीमांसकैः तथाहि–'जातिमेवाकृतिं प्राहुः व्यक्तिराक्रियते यया। सामान्यं तच्च पिण्डानामेकबुद्धिनिबन्धनम् ॥३॥ तन्निमित्तञ्च यत्किञ्चित्सामान्यं शब्दगोचरम् ॥४॥ सामान्यमाकृतिर्जातिः शक्तिर्वा साऽभिधीयताम् ॥१८॥ यद्यप्येव वस्त्वनेकाकारं तर्हि तादृगेव शब्दोऽभिमतः सामान्यमात्राभिधायी न स्यादत आह–न चेति। न च तत्तादृक् कश्चिच्छब्दः शक्नोति भाषितुम् ॥ ६२ ॥ सामान्यांशानपोद्धृत्य पदं सर्वं प्रवर्तते। –मी० श्लो० आकृति० श्लो० ३४, १८, ६२। 'पूर्वं सामान्यविज्ञानात् चित्रबुद्धेरनुद्भवात्। गामानयेति वाक्याच्च यथार्थैव परिग्रहात् ॥ गोशब्दोच्चारणे हि पूर्वमेवागृहीतासु व्यक्तिषु सामान्यं प्रतीयते तत्पूर्वकत्वाच्च पश्चाद् व्यक्तयः प्रतीयन्ते अतश्चाकृतिप्रत्ययस्य निमित्तान्तराभावाद् व्यक्तिप्रत्यये च पूर्वप्रतीतसामान्यनिमित्तत्वात् आकृतिः शब्दार्थ इति विज्ञायते। यदि च व्यक्तयोऽभिधेया भवेयुस्ततस्तासां चित्रखण्डमुण्डशबलादिरूपस्वरूपग्रहणाद्विचित्रा शब्दोच्चारणे बुद्धिः स्यात्। एकाकारा तु उत्पद्यते। तेनाप्याकृतिः शब्दार्थ इति निश्चीयते। गामानयेति चोदिते अर्थप्रकरणाभावे या काञ्चित् सामान्ययुक्तां व्यक्तिमानयति न सर्वां न विशिष्टाम्। यदि च व्यक्तेरभिधेयत्वं ततः सर्वासां युगपदभिहितत्वात् सर्वानयनं स्यात्। या वाऽभिधया सैवैका आनीयेत यतस्त्वविशेषेण जातिमात्रयुक्ता आनीयते तेनापि सामान्यस्य पदार्थत्वं विज्ञायते।'–तन्त्रवा० १।३।३३। 'आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वबाधनं। सम्बन्धाग्रहणान्नाश्चित्रबुद्धेरभावतः ॥ अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः। आकृतेः प्रथमज्ञानात्तस्या एवाभिधेयता ॥ व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता। लिङ्गसंख्याऽभिसम्बन्धः सामानाधिकरण्यधीः ॥ सर्वं समञ्जसं ह्येतदस्यानेकान्तवादिनः। –शास्त्रदी० १।३।३५। सम्बद्धा धर्मात्मतत्र भिद्यमाना यथास्थिषु। जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥'–वाक्यप० ३।३३। (९) शब्दप्रभव–आ० टि०। (१०) सामान्यस्य–आ० टि०। (११) व्यक्तिविषय। (१२) यावन्त्वनन्तास्वपि व्यक्तिषु।

1 शब्दप्रत्यय श्र० ब०। 2–विषयतया ब०। 3 तस्य प्रति–आ०। 4–एवोपपत्ते ब०।

तोपपत्तेः, न पुनर्विशेषाः[1] तेषामानन्त्यतः[2] कार्त्स्न्येनोपलब्धुमशक्यतया तद्विषय[3]तानुपपत्तेः। अथ यावतामुपलम्भः तावत्स्वेव सङ्केतक्रियोपगम्यते, तर्हि विशेषान्तरेषु सङ्केतासम्भवात् शाब्दव्यवहारानुपपत्तिः। न चायोगिनः प्रतिपत्तुः प्रत्येकमशेषविशेषोपलम्भः[4] सकृत् क्रमेण वा सम्भवति, अयोगित्व[5]विरोधानुषङ्गात्। योगिनस्तु विनोदापन्नत्वात् तदुपलम्भो[6] दूरोत्सारित एव। न चानुपलब्धेषु तेषु[7] 'इदमस्य वाचकम्, इदञ्च वाच्यम्' इत्यभिधानाभिधेयप्रतिपत्तिनियमलक्षणः सङ्केतः सम्भवति, तदसम्भवे[8] च शब्दश्रवणादर्थप्रतिपत्त्यनुपपत्तेः सिद्धः शाब्दव्यवहारोच्छेदः। ततस्तद्व्य[9]वहारमिच्छता सामान्यमात्रे सङ्केतोऽभ्युपगन्तव्यः अतस्तदेव[10] शब्दार्थः सिद्धः।

किञ्च, जातिमद्विशेषशब्दार्थवादिना किं जातिमभिधाय शब्दो व्यक्तिमभिधत्ते, अनभिधाय वा? न तावदभिधाय, जातिलक्षणविशेषणविशेषप्रतिपत्तावेव उपक्षीणशक्तिकत्वेनास्य विशेष्याप्रतिपादकत्वप्रसङ्गात्। उक्तञ्च[11]–

"विशेष्यं नाभिधा[12] गच्छेत् क्षीणशक्तिर्विशेषणे।" [ ] इति।

नाप्यनभिधाय, विशेषमात्रप्रतिपादकत्वेन जातिमद्वाचकत्वाभावानुषङ्गात्। न च सामान्यमात्रस्य अभिधानैरभिधाने विशेषाणामनभिधानात् प्रयोजनार्थिनः शब्दात्प्रवृत्तिर्न प्राप्नोति, प्रतिपन्नस्यापि तेन[13] तन्मात्रस्य[14] प्रयोजनाप्रसाधकत्वादित्यभिधातव्यम्, तत्प्रतिपत्त्यन्यथानुपपत्त्या[15] विशेषाणामपि प्रतिपत्तिसम्भवात्। प्रथमतो हि शब्दात्सा-

---

(१) शब्दविषया इति सम्बन्धः। (२) "न ह्यनन्तासु व्यक्तिषु सम्बन्धः शक्यतेऽवगन्तुम्।"–शास्त्रदी० १।३।३५। (३) सङ्केत–आ० टि०। (४) अशेषव्यक्त्युपलम्भे हि सर्वज्ञत्वमेव स्यादिति भावः। (५) मीमांसको हि सर्वज्ञं न मनुते–आ० टि०। (६) तस्य व्यक्तीनामुपलम्भः। (७) विशेषेषु–आ० टि०। (८) अभिधानाभिधेयप्रतिपत्तिनियमलक्षणसङ्केताभाव–आ० टि०। (९) शाब्दव्यवहार–आ० टि०। (१०) सामान्यमेव–आ० टि०। (११) उद्धृतोऽयम्–प्रश० व्यो० पृ० १९१। काव्यप्र० पृ० ४४। मुक्तावं० दिन० पृ० ३७३। काव्यानु० पृ० २५। 'अभिधा पदशक्तिः, विशेष्यं न गच्छेत् न प्राप्नोति। कुत इत्याशङ्कायामाह–क्षीणेति। क्षीणशक्तिर्विशेषणे इत्यनन्तरं सन्धिना पूरणीयम्। तथा च यतो विशेषणं प्राप्य पदशक्तिः क्षीणशक्तिः क्षीणसामर्थ्या भवत्यतो विशेष्यं नाभिधा गच्छेत् न प्राप्नुयादिति पर्यवसितार्थः।"–रामरु० पृ० ३७३। (१२) 'स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते।"–काव्यप्र० पृ० ३९। (१३) शब्दात–आ० टि०। (१४) सामान्यमात्रस्य–आ० टि०। (१५) सामान्यप्रतिपत्त्यन्यथानुपपत्त्या। 'न ह्यनभिधाय गोत्वमुपलक्षणं गोव्यक्तावेव प्रयोगव्यवस्था लभ्यते। तच्चेदभिहितं सिद्धमाकृतिशब्दार्थत्वमिति।'–तन्त्रवा० १।३।३३। "न ह्यनभिधाय जातिं तज्जातीयत्वेन रूपेण व्यक्तिरभिधातुं शक्यते। ततश्च विशिष्टाभिधानमेव वाचोयुक्त्यन्तरेणापन्नं न शुद्धाभिधानम्। विशिष्टाभिधाने च पूर्वतरं विशेषणमभिधातव्यम्। तदभिधानं च तत एव अत्यन्ताविनाभूतव्यक्तिप्रतिपत्तिसिद्धेः न तत्र अभिधानशक्तिकल्पनावसरः।"–शास्त्रदी० १।३।३५।

---

1 सह क्रमेण ब०। 2–व्यमभिधा–श्र०। 3 शब्दार्थः प्रसिद्धः श्र०। 4–लक्षणप्रतिप–ब०। –लक्षणविशेषणप्र–श्र०। 5–रभिधान

मान्यमात्र प्रतीयते, पश्चात्तदन्यथानुपपत्त्या पिण्डविशेषो लक्षणया प्रतीयते निराकारस्य सामान्यस्य अश्वनिपाणवदसम्भवात्। उक्तञ्च–

"शैलाभिधयाविनाभूतप्रतीतिलक्षणोच्यते।" [तन्त्रवा० १।४।२३] इति।

तैल्लक्षितगोपिण्डादिविशेषप्रतीत्य यथानुपपत्त्या तु वाहदोहादिप्रयोजनविशेषप्रतीति लक्षितलक्षणेति ॥छ॥

अत्र प्रतिविधीयते। यत्तावदुक्तम्–सामान्यमात्रमेव हि शब्दाना गोचर इत्यादि, तदसमीक्षिताभिधानम्, सङ्केतानुसारेण शब्दस्य वाचकत्वोपपत्ते। सङ्केतश्चास्य सर्वत्रैव प्रतिपन्नो न पुन सामान्यमात्रे, प्रवृत्त्यागोचरतया वाहदोहाद्यर्थक्रियाकारित्वविकलतया च केवलेऽस्मिन् शाब्दव्यवहारासम्भवत सङ्केतप्रतिपत्तेर्निष्फलत्वात्। 'एवंविधाद्धि शब्दा देवविधोऽर्थ त्वया प्रतिपत्तव्य, एतज्जातीय के चार्थे शब्दोऽप्येतज्जातीयक प्रयोक्तव्य' इति सदृशपरिणामापन्नयोरेव वाच्यवाचकयो सङ्केतविज्ञा सङ्केत प्रतिपाद्यो माहित ।

तद्विरोधपुरस्सर शब्दस्य वस्तुभूतमान्यविशेषात्मकार्थ वाचकत्वसमर्थनम्–

यदपि 'विशेषाणामभिधेयत्वे आनन्त्यत कात्स्न्येनोपलब्धुमशक्यतया' इत्याद्युक्तम्, तदप्यसाम्प्रतम्, साध्यसाधनव्यक्तिवत् सदृशपरिणामापन्नाना वाच्यवाचकव्यक्तीनामानन्त्येऽपि ऊहज्ञानेन कात्स्न्येन प्रतिपत्तु शक्यत्वात्। एतच्च शब्दार्थयो

(१) आह च–तेन तत्राभिनव्यक्त क्रियासम्बन्धचोदना। जातिव्यक्त्योरभेदो वा वाक्यार्थेषु विवक्षित ।'–शास्त्रदी० १।३।३५। लक्षणाया स्वरूपम्–"मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्। अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया॥"–काव्यप्र० पृ० ४०। सा० द० २।९। वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तित । तत्सम्बन्धवशप्राप्तस्यान्वया लक्षणोच्यते ॥–प्रक० वाक्यार्थ० पृ० १३। (२) अभिधयाविनाभूत प्रवृत्तिर्लक्षणेष्यते'–तन्त्रवा० १।४।२३। उद्धृतोऽयम्–अभिधयाविना –काव्यप्र० पृ० ५०। प्रवृत्तिर्लक्षणेष्यते–तैत्ति० पृ० २०४। पदार्थदी० पृ० ३१। (३) सामान्यलक्षित। (४) यत्र तु लक्ष्यार्थस्य परम्परासम्बन्धरूपा लक्षणा सा लक्षितलक्षणेत्युच्यते। यथा द्विरेफादिपदे रेफद्वयसम्बन्धो भ्रमरपदे ज्ञायते, भ्रमरपदस्य च सम्बन्धो भ्रमरे ज्ञायते तत्र सर्वत्र लक्षितलक्षणा। –मञ्जूषा० पृ० २८९। (५) पृ० ५६६ प० ७। (६) सामान्यवति विशेष– आ० टि०। (७) आनिमात्रे हि सङ्केतात् व्यक्तेर्भान सुदुष्करम्। –शब्दश० का० १९। (८) तुलना– तत्र जातिरनर्थक्रियायोग्या। नहि जातिर्वाहदोहादौ क्वचिदपि प्रत्युपस्थिता। न वा तादृगुपकरणाभावे लोकव्यवहारेषु शब्दप्रयोग। न जातिर्वाहदोहादिक कर्तु समर्था। ततश्च वाहदोहार्थिनो जातिचोदना निष्फलेति न तदर्थ शब्दप्रयोग। यापि स्वप्रतिपत्तिलक्षणाऽर्थक्रिया जातरुपवर्ण्यते न तस्यामपुरुष प्रवर्तते शब्दप्रयोगादेव तस्या सिद्धत्वात्। जातिमात्रप्रतिपत्त्यर्थ शब्दप्रयोगो भविष्यतीति चेन्न आह–नेत्यादि। तादृग्धर्मिणि वाहदोहादिप्रकरणे निष्फलस्य शब्दप्रयोगस्योपेक्षणीयत्वादिति युक्तत्वात्। जातौ च वाच्यायां सर्वथा सामान्यत्वात्र वाक्य न वाक्यार्थप्रतीति स्यात गोत्वस्य क्रियान्वैस्त्वयाभावात्। –प्रमाणवा० स्ववृ० टी० ११९५। न खलु सर्वात्मना सामान्य वाच्य तत्प्रतिपत्तः अर्थक्रिया प्रत्यनुपयोगात्। न हि गोत्व वाहदोहाद्युपयुज्यते। –अष्टश०, अष्टसह० प० १३९। तत्त्वार्थश्लो० पृ० १०२। (९) पृ० ५६७ प० १।

1 लक्षणाया श्र०। 2 तदुक्तम् ब० श्र०। 3 प्रतिपन्ने न ब०।

निर्व्यसम्बन्धनिषेधे[1] अपोहप्रतिषेधे[2] च प्रपञ्चितमित्युपरम्यते । तथा च 'न चायोगिनः प्रतिपत्तुः प्रत्येकमशेषविशेषोपलम्भः सकृत् क्रमेण वा सम्भवति' इत्यादि[3] प्रत्युक्तम्, अयोगिनोपि अशेषविशेषाणामुक्तविधिनोपलम्भसम्भवप्रतिपादनात् ।

यदप्युक्तम्–'किं जातिमभिधाय शब्दो व्यक्तिमभिधत्ते' इत्यादि, तदप्यसाम्प्रतम्, जातितद्वतोर्युगपदेव एकत्र ज्ञाने प्रतिभाससम्भवात् । नचैकज्ञानविषयत्वे विशेषणविशेष्यभावप्रतिनियमो न स्याद्, विपर्ययो वा स्यात् विशेषणस्यापि विशेष्यरूपतानुषङ्गादित्यभिधातव्यम्, दण्डपुरुषयोर्युगपदेकत्रापि ज्ञाने प्रतिभासमानयोः विशेषणविशेष्यभावप्रतिनियमप्रतीतेः । तत्प्रतिभासाविशेषेऽपि हि येन विशिष्टं यत् प्रतीयते तद्विशेषणम् इतरद् विशेष्यम् । न खलु दण्डादेः पुरुषे विशिष्टप्रतीतिजननादन्यद् विशेषणत्वं सम्भवति । यथा च चाक्षुषे ज्ञाने दण्डपुरुषयोः विशेषणविशेष्यभावापन्नयोर्युगपत्प्रतिभासमानत्वात् तत्प्रतिनियमाविरोधः तथा दण्डीतिशब्देऽपि । नह्यत्र दण्डमात्रं पुरुषमात्रं वा प्रतिभासते, विशेषणविशेष्यभावापन्नस्य युगपदुभयस्य प्रतिपादनात् । अतो दण्डिशब्दात् दण्डविशिष्टः पुरुषो यथा प्रतिभासते तथा गोशब्दात् गोत्वविशिष्टः पिण्ड इति प्रतिपत्तव्यम् । अथ गोशब्दश्रवणात् शाबलेयादिविशेषाऽप्रतीतेर्न विशेषः शब्दार्थः, तन्न, तद्विशेषाप्रतीतावपि सामान्ययुक्तः ककुदादिमान् विशेषो गोशब्दात् प्रतीयत एव शाबलेयादिविशेषास्तु नर्मुक्ताः शाबलेयादिशब्देभ्यः प्रतीयन्ते । नचैतावता सामान्यमेव शब्दार्थो युक्तः, प्रधानोपसर्जनभावेन उभयोः प्रतिभासनात् । 'गामानय' इत्यादि-

(१) पृ० ५५० पं० ११ । (२) पृ० ५६४ पं० १४ (३) पृ० ५६७ पं० ३ । (४) उक्तविधिना उक्तप्रमाणेन (ऊहाख्येन) –आ० टि० । (५) पृ० ५६७ पं० ९ । (६) तुलना–"प्रत्यक्षं तावद् द्वयोरपि विशेषणविशेष्ययोरिन्द्रियविषयत्वं सामान्ये हि संयुक्तसमवायादिन्द्रियं प्रवर्तमानं विशेषणवद्विशेष्यमपि विषयीकरोति । न हि सामान्यं प्रत्यक्षं विशेषोऽनुमेय इति व्यवहारः । एवं गुणत्वग्राहिणीन्द्रियं गुणिनोऽनुमेयत्वं स्यात्, नचैवमस्ति । तस्माद् विशेषपर्यन्तं प्रत्यक्षं तथा शब्दमपि नतु पर्यवसायं न तु सामान्यमात्रनिष्ठमिति युक्तम् यथा विध्यन्तपर्यन्तो वाक्यव्यापार इष्यते । तथैव व्यक्तिपर्यन्तः पदव्यापार इष्यताम् ।"–न्यायम० पृ० ३२४–२५ । (७) दण्ड एव विशेषणं पुरुष एव च विशेष्यमिति । (८) एकत्र ज्ञाने प्रतिभासमानेऽपि । (९) दण्डयुक्तोऽयमिति । (१०) शाब्दे ज्ञाने । (११) तुलना–"अथ गोशब्दश्रवणाच्छाबलेयादिविशेषाप्रतिपत्तेन विशेषः शब्दार्थः, सत्यम् किं तर्हि ? सामान्ययुक्तोऽयं प्रतीयते न शाबलेयादिविशेषः, स च शाबलेयादिशब्देभ्य एव प्रतीयत इति न चैतावता सामान्यमेव शब्दार्थः प्रधानोपसर्जनभावेनोभयोः प्रतिभासनात् । तथा गामानयेत्यादिचोदितः सामान्यवतोऽस्य आनयनादिक्रियया सम्बन्धात् ।'–प्रश० व्यो० पृ० १०२ । (१२) शाबलेयादिशब्दस्य विशेषस्य अप्रतिभासनेऽपि । (१३) गोत्वविशिष्टः । (१४) तुलना– व्यक्त्याकृतिजातयस्तु पदार्थः । गुणप्रधानभावस्यानियमेन पदार्थं वर्णिनि । यदा हि भेदविवक्षा विशेषावगतिश्च तदा व्यक्तिः प्रधानम् अङ्गं तु जात्याकृती यदा तु भेदोऽविवक्षितः सामान्यविवक्षा तदा जातिः प्रधानम् अङ्गं तु व्यक्त्याकृती । तदेतद् बहुलं प्रयोगेषु । आकृतेस्तु प्रधानभाव उत्प्रेक्षणीयः ।"–न्यायभा० २।२ ६७ । न्यायवा० पृ० ३२९ । न्यायम० पृ० ३२५ ।

1–मिरपुष्यते ब० । 2 युगपत्तदुभयस्य ब०, श्र० । 3 बगाबन–पृ० ।

प्रयोगेषु सामान्यतोऽर्थस्य आनयनादिक्रियाभिसम्बन्धप्रतीतेश्च तद्वानेव शब्दार्थः ।

यच्चान्यदुक्तम्-'विशेष्यं नाभिधा गच्छेत्' इत्यादि, तदप्यपेशलम्, 'विशेषणं प्राक् प्रतिपाद्य पुनर्विशेष्यं शब्दः प्रतिपादयति' इति विरम्य व्यापारानभ्युपगमात्, युगपदेवास्य विशेषणविशेष्यप्रतिपादनव्यापारप्रदर्शनात्। क्षीणशक्तित्वञ्चास्याऽनुपपन्नम्, शक्तेः कार्यानुमेयत्वात्, विशेषणविशेष्यप्रतिपत्तिलक्षणं हि कार्यमुपलभ्यमानं तत्कार्यं शक्तिमनुमापयति। भिन्नज्ञानालम्बनयोश्च विशेषणविशेष्यत्वे इदं चोद्यं स्यात्, न त्वेकज्ञानालम्बनयोः। भवतोऽपि चैतच्चोद्यं समानम्-उपलब्धस्य हि शब्दस्य अर्थप्रतिपादकत्वं स्यात्, अतः स्वात्मप्रतिपत्तावेवास्य क्षीणशक्तित्वात् सामान्यलक्षणाऽर्थप्रतिपादकत्वमपि न स्यादिति लाभमिच्छतो मूलोच्छेदः स्यात्।

अथ सामान्यप्रतिपत्तेर्दृष्टत्वान्न तत्रास्य[11] शक्तेः प्रक्षयः, तर्हि विशेषणविशेष्यप्रतिपत्तेरप्यतो[12] दृष्टत्वात् कथं तत्राप्यस्य[13] तत्प्रक्षयः[14] स्यात्।

यदप्यभिहितम्[16]-'तत्प्रतिपत्त्यन्यथानुपपत्त्या' इत्यादि, तदप्यभिधानमात्रम्, यतो यदि शब्दात्सामान्यमेव प्रतीयते तर्हि व्यक्तेः किमायातं येन तत्ता[17] लक्षयति ? अथ

(१) तुलना- अन्यथा तु प्रयोगेषु गां दहीत्येवमादिषु। तद्वतोऽर्थक्रियायोगात्तस्यैवाहुः पदार्थताम् ॥'-न्यायम० पृ० ३२३। (२) सामान्यविशेषवान्-आ० टि०। (३) पृ० ५६७ पं० १२। (४) तुलना- प्रथमं जातिमात्रमवधार्य तद्व्यवसानादनन्तरं विशेषमवबोधति, किं वाऽन्तर्भाविन्नविशेषामेव जातिम् ? नाद्यः पदबुद्धयो विरम्य व्यापाराभावात्।'-विस्तु० पृ० २६३। 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति वादिभिरेव।-सा० द० परि०५। (५) शब्दस्य। (६) शब्दस्य। तुलना- ननूक्तं क्षीणशक्तित्वाद्विशेषणानि विशेष्यं नाभिदध्यात् इति तावच्छक्तेः कार्यविषयत्वात्। कार्यञ्च विशेषणप्रतिपत्तिवत् विशेष्यप्रतिपत्तिलक्षणमुपलभ्यमानं शक्तिव्यवस्थापकम्। अथ कार्यस्य बाधाऽभावे यत्र स एव ब्रुवाणः स्वसंवेदनमपि बाधते विशेष्यप्रतिपत्तेः संवेदनात्। -प्रश० व्यो० पृ० १९२। (७) विशेषणविशेष्योभयप्रतिपत्तौ। (८) शब्दस्य। (९) मीमांसकस्यापि। तुलना- समानञ्चैतत् उपलभ्यमानस्य शब्दस्य अर्थप्रतिपादकत्वाभ्युपगमात् स्वात्मप्रतिपत्तौ च क्षीणत्वात् सामान्यप्रतिपादकत्वं न स्यात्।'-प्रश० व्यो० पृ० १९२। (१०) शब्दस्य। (११) सामान्यप्रतिपत्तौ शब्दस्य। (१२) शब्दात्। (१३) शब्दस्य। (१४) शक्तिप्रक्षयः। (१५) पृ० ५६७ पं० १६। (१६) तुलना- व्यक्तेरशक्यचोदनत्वात् लक्षितलक्षणया जातिरुच्यते इति चेत् अशब्दचोदिते सम्बन्धे सत्यपि कथं प्रवर्तेत ? न हि कश्चित् शब्दः छिन्धीत्युक्ते दण्डिनं छिनत्ति। लक्षितलक्षणत्यादि परः। सत्यं न सामान्यमर्थक्रियाकारि किन्तु व्यक्तिरेव, केवलं व्यक्तेरशक्यचोदनत्वात् कारणात् सामान्यं नियुक्तः शब्दः सामान्यं लक्षयति। तेन सामान्येन शब्दोपनीतेन सम्बन्धाद् व्यक्तिरपि लक्ष्यते इति। न हि गोशब्दादुच्चारितात् गोत्वं प्रतीयते अपि तु गौरेवावगम्यते। न नामैव तथाप्युच्यते। अशब्दचोदितेयादि। यदि नाम जातिव्यक्त्योः सम्बन्धः तथापि अशब्दचोदिते व्यक्तिविशेषे कथं प्रवर्तते ? नैव। दण्डदण्डिनोस्सत्यपि सम्बन्धे न हि कश्चित्प्रमाणपूर्वकारी दण्डं छिन्धि इत्युक्ते दण्डिनं छिनत्ति अशब्दचोदितत्वात्। तथा जातौ चोदितायां व्यक्तौ प्रवृत्तिर्न युक्तेत्यर्थः। -प्रमाणवा० स्ववृ० टी० १।९५। लक्षितलक्षणया वृत्तिरतादात्म्ये न भवेत् सम्बन्धान्तरासिद्धेः कार्मुकादिवत्। -अष्टश० अष्टसह० पृ० १३९। तत्त्वार्थश्लो० पृ० १०२। किञ्च यदि नाम शब्दाज्जातिः प्रतिपन्ना व्यक्तेः किमायातं यनासौ तां गमयति। -प्रमेयक० पृ० ४१२। (१७) सामान्यं तां व्यक्तिम्।

1 यच्चेदं तदप्य-आ०। 2 शब्दसामा-ब०।

व्यक्त्या सह तस्य[1] सम्बन्धसद्भावात् ततः[2] तत्प्रतीयमानं तां लक्षयति, कः पुनस्तस्या[3]स्तेन सम्बन्धो नाम–संयोगः, समवायः, तदुत्पत्तिः, तादात्म्यं वा ? न तावत्संयोगः, अद्रव्यत्वात्[4]। नापि समवायः, अपसिद्धान्तप्रसङ्गात्[5]। तदुत्पत्तिरपि अत[6] एवानुपपन्ना। तादात्म्याभ्युपगमे तु सामान्यविशेषयोः तादात्म्यापन्नयोः एकस्मादेव गवादिशब्दात् विशेषणविशेष्यरूपतया प्रतीयमानयोः कथमेकस्यैव शब्दार्थत्वं वक्तुं युक्तम्, अप्रामाणिकत्वप्रसङ्गात् ?

किञ्च, अनयोस्तल्लक्षणः[7] सम्बन्धः शब्दप्रयोगकाल एव प्रतिपन्नः, पूर्वं वा ? न तावत्तत्काल एव, व्यक्तेः शब्दोच्चारणकाले[8]ऽप्रतीतेः, प्रतीतौ वा किं लक्षणया ? तत्काले तत्प्रतीतिश्च[9] किं प्रत्यक्षतः, अनुमानात्, शब्दादेव वा स्यात् ? न तावत्प्रत्यक्षतः, देशकालस्वभावविप्रकृष्टाया व्यक्तेः इन्द्रियसम्बन्धाभावतस्तदुभय[10]प्रत्यक्षेण प्रत्येतुमशक्यत्वात्। नाप्यनुमानतः, तत्प्रतिबद्धलिङ्गाऽदर्शनात्। शब्दादेव तत्प्रतीतौ[11] तु सिद्धं व्यक्तेरपि शब्दार्थत्वम्[12]। अथ पूर्वं जातिव्यक्त्योस्तादात्म्यलक्षणः सम्बन्धः प्रतिपन्नः, यदि नाम तत्र[13] तयोरसौ दृष्टो नैतावता सर्वत्र सर्वदा तयोस्तेन[14] भाव्यम्, अन्यथा पटस्य शुक्लरूपेण क्वचित् कदाचित्तादात्म्यदर्शनात् सर्वत्र सर्वदा तद्[15]भावः स्यात्।

अथ जातेरिदमेव स्वरूपं यद् व्यक्तिनिष्ठता, ननु किं सर्वसर्वगतायास्तस्यास्तद्रूपं[16] स्यात्, व्यक्तिसर्वगताया वा ? तत्राद्यपक्षोऽनुपपन्नः, व्यक्त्यन्तराले[17] तदभाव[18]प्रसङ्गात् तत्र[19] तद्रूप[20]स्यासंभवात्। व्यक्तिसर्वगतायास्तु तस्या[21] तद्रूपोपगमे व्यक्तिवज्जातेरप्यनेकत्वप्रसिद्धेः उभयोरविशेषतः शब्दार्थत्वं स्यात्, न वा कस्यचित्। अस्तु वा अविचारितस्वरूपायास्तस्यास्तन्निष्ठ[22]स्वभावता, तथाप्येषा[23] 'सर्वत्र सर्वदा व्यक्तिनिष्ठा' इति प्रत्यक्षतः प्रतीयेत, अनुमानतो वा ? प्रत्यक्षतश्चेत्, किं युगपत्, क्रमेण वा ? तत्राद्यपक्षोऽनुपपन्नः,

(१) सामान्यस्य। (२) शब्दात्। (३) व्यक्तेः। (४) द्रव्ययोरेव संयोगात्, संयोगस्य गुणत्वेन द्रव्याश्रितत्वात्। (५) न हि मीमांसकाः समवायं स्वीकुर्वन्ति। (६) अपसिद्धान्तप्रसङ्गादेव, नहि सामान्ययोः परस्परमुत्पाद्योत्पादकभावः। (७) सामान्यव्यक्त्योः। तुलना–"सम्बन्धस्तयोस्तदा प्रतीयते पूर्वं वा ?"–प्रमेयक० पृ० ४१२। (८) शब्दोच्चारणसमये। (९) तादात्म्यलक्षणसम्बन्धप्रतीतिः। (१०) इन्द्रियार्थसन्निकर्षोत्पन्न। (११) सामान्यव्यक्त्योस्तादात्म्यस्य प्रतीतौ। (१२) न हि व्यक्त्यनधिगतावपि तन्निष्ठः सम्बन्धो ग्रहीतुं शक्य इति। (१३) पूर्वम्। (१४) सम्बन्धेन। (१५) शुक्लतादात्म्यम्। (१६) जातेः यद् व्यक्तिनिष्ठताख्यं स्वरूपमुक्तं तस्य अभावप्रसङ्गात्। (१७) व्यक्त्यन्तराले। (१८) व्यक्तिनिष्ठताख्यस्य स्वरूपस्य असंभाव्यमानत्वात्। व्यक्त्यभावे हि न व्यक्तिनिष्ठताख्यं स्वरूपं सिद्ध्यति अतश्च स्वरूपाभावात् स्वरूपवतः सामान्यस्याप्यभावः। (१९) जातेः। (२०) व्यक्तिनिष्ठताख्यस्वरूपस्वीकारे। (२१) जातेः। (२२) व्यक्तिनिष्ठ। (२३) जाति–आ० टि०। तुलना–"किञ्च, सर्वदा जातिर्व्यक्तिनिष्ठेति प्रत्यक्षेण प्रतीयते अनुमानेन वा ?"–प्रमेयक० पृ० ४१२।

1–विपर्यास्ता–आ०। [illegible] तादात्म्यापन्नविशेषयोः श्र०। 3–तावता सर्वदा श्र०। 4 क्वचित्स्वता वा–आ०। 5 सर्वदा भावः ब०। 6 तदभावप्र–आ०, श्र०। 7–स्य संभवात् श्र०। 8–संभवन् आ०।

निखिलव्यक्तीनां युगपत्प्रतिपत्तौ जातेस्तन्निष्ठतया युगपत्प्रतिपत्त्यनुपपत्तेः । द्वितीयपक्षे तु निरवधेर्व्यक्तिपरम्परायाः युगसहस्रेणापि क्रमेण प्रतिपत्त्यभावतः तस्यास्तन्निष्ठतावसायसम्भवोऽतीव दुर्घटः । तन्न प्रत्यक्षतः तस्यास्तन्निष्ठताधिगमो युक्तः । नाप्यनुमानतः, प्रत्यक्षपूर्वकत्वेनास्य भवताऽभ्युपगमतस्तदभावे तस्यापि तत्राऽप्रवृत्तेः, तस्यास्तन्निष्ठतयाऽविनाभाविलिङ्गासम्भवाच्च । ततः शब्दस्य सामान्यवाचकत्वे व्यक्तिवाचकत्वानुपपत्तिरेव ।

किञ्च, सामान्ये सङ्केतितः शब्दः तदभिधत्ते, असङ्केतितो वा ? न तावदसङ्केतितः, अतिप्रसङ्गात् । अथ सङ्केतितः, किं प्रतिपन्ने सामान्ये तत्सङ्केतः स्यात्, अप्रतिपन्ने वा ? यद्यप्रतिपन्ने, अतिप्रसङ्गः । अथ प्रतिपन्ने, कुतस्तत्प्रतिपत्तिः ? न तावत् प्रत्यक्षानुमानाभ्याम्, नित्यादिस्वभावसामान्यग्राहकत्वेन अनयोः सामान्यपरीक्षावसरे प्रतिक्षिप्तत्वात् । शब्दैकप्रामाणसमधिगम्यत्वे तु अनवस्थेतरेतराश्रयदोषानुषङ्गः । तथाहि–यदि य एव शब्दः सामान्ये सङ्केत्यते तत एव तत्प्रतिपत्तिः, तदा इतरेतराश्रयः–प्रतिपन्ने हि सामान्ये तत्रास्य सङ्केतसिद्धिः, तत्सिद्धौ च ततः सामान्यप्रतिपत्तिरिति । शब्दान्तरात्तु तत्सिद्धौ अनवस्था, तस्यापि हि शब्दान्तरस्य प्रतिपन्ने सामान्ये सङ्केतो भविष्यति, तत्प्रतिपत्तिश्च अन्यस्मात् शब्दान्तरादिति । यदि च शब्दात्सामान्यमेव प्रतीयते, तदा शाब्दमप्रमाणमेव स्याद् गृहीतग्राहित्वात्, शब्दार्थयोः सम्बन्धग्राहिणैव हि प्रमाणेन सामान्यं गृहीतमिति ।

किञ्च, शब्दान्निर्विशिष्टं सामान्यं प्रतीयमानं पुरुषं प्रवर्त्तयति, विशिष्टं वा ? न तावन्निर्विशिष्टम्, अतिप्रसङ्गात् । अथ विशिष्टम्, किङ्कृतमस्य वैशिष्ट्यम्–विशिष्टव्यक्तितादात्म्यकृतम्, तत्रैव तत्प्रवृत्तिहेतुत्वकृतम्, अस्येदमिति प्रतीतिकृतं वा ? तत्राद्यपक्षोऽनुपपन्नः, तस्य स्वकीयसकलव्यक्तिभिः सह तादात्म्यसद्भावतो विशिष्टव्यक्तावेव तादात्म्यानुपपत्तेः । अथ स्वकीयाखिलविशिष्टव्यक्तितादात्म्यकृतमेव अस्य वैशिष्ट्यमुच्यते, तन्न; तेन सर्वत्र तद्व्यक्तौ पुरुषस्य प्रवृत्तिप्रसङ्गात् प्रतिनियतद्व्यक्तौ प्रवृत्त्यभावः स्यात् । न च गोशब्दात् गोत्वमात्रप्रतीतौ क्वापि व्यक्तौ प्रवृत्तिरुपपद्यते, तस्याः सर्वथाऽप्रतिपन्नत्वात् । यस्मिन् प्रतीयमाने यत् सर्वथा न प्रतीयते न तत्प्रतीतितस्तत्र प्रवृत्तिः यथा जलप्रतीतितोऽनले, गोशब्दाद् गोत्वमात्रप्रतीतौ न प्रतीयन्ते च खण्डादयो व्यक्तिविशेषा इति ।

(१) अनन्तायाः । (२) ज्ञानं । (३) मीमांसकादिना । (४) प्रत्यक्षाभावे । (५) अनुमानस्यापि । (६) जातेर्व्यक्तिनिष्ठत्वबोधने । (७) जातेः । (८) प्रत्यक्षानुमानयोः । (९) पृ० २८५ । (१०) शब्दस्य । (११) सामान्यसिद्धौ । (१२) भूयोदर्शनादिना । (१३) यत्र हि शब्दार्थसम्बन्धग्रहणकाले सामान्यं गृहीतं तत्रैव शब्दोच्चारणकालेऽपि–आ० टि० । (१४) सामान्यस्य । (१५) विशिष्टव्यक्तावेव । (१६) सामान्यस्य । (१७) व्यक्तेः–आ० टि० । (१८) गोत्वसामान्यमात्रस्यैव प्रतिपन्नत्वात्–आ० टि० । (१९) शब्दात् गोत्वप्रतीतावपि न शावलेयादिषु प्रवृत्तिः तत्प्रतीतावपि तेषां सर्वथाऽप्रतिपन्नत्वात् ।

1–जाते सत व० । 2–तत्सिद्धौ आ० ।

अथ गोशब्दाद् गोत्वं प्रतीयमानं गोव्यक्तिसम्बद्धमेव प्रतीयते, कथमेव सामान्यमेव शब्दार्थः स्यात् ? विशेषणविशेष्यभावापन्नयोः सामान्यविशेषयोः ततः प्रतीतेः । ननु गोशब्दात्साक्षाद् गोत्वमेव प्रतीयते, व्यक्तिस्तु तदन्यथानुपपत्त्यैव प्रतीयते इति, तदप्यसुन्दरम्, एवं जातेरेव शब्दार्थत्वमायातं व्यक्तेस्तु प्रमाणान्तरगम्यता, तथा च शब्दस्य लक्षणया विशेषप्रतिपादकत्वं दुर्घटम् । अथ शब्दस्यैव अयमान्तरो व्यापारः यत् सामान्यं प्रतिपाद्य तत्प्रतिपत्तिसहकारी व्यक्तिमपि गमयति लक्षणयेति, तदसाम्प्रतम्, यतो यत्रैव सम्बन्धस्मरणसहकारी शब्दः प्रवर्त्तते स एव तस्यार्थो न पुनस्तदर्थाविनाभावित्वेन यद्यत्प्रमाणान्तरतः प्रतीयते तत्तत्सर्वं शब्दोदरे प्रक्षेप्तव्यम्, अन्यथा प्रत्यक्षसिद्धधूमान्यथानुपपत्त्या सिद्धो वह्निः प्रत्यक्षसिद्ध एव स्यात् । तन्न विशिष्टव्यक्तितादात्म्यकृतमस्य वैशिष्ट्यं घटते ।

नापि तेनैव तत्प्रवृत्तिहेतुत्वकृतम्, अन्योन्याश्रयानुषङ्गात् । तथाहि–सामान्यस्य विशिष्टत्वसिद्धौ सत्यां विशिष्टविशेषेष्वेव प्रवृत्तिहेतुत्वसिद्धिः, तस्याञ्च सत्यां सामान्यस्य विशिष्टत्वसिद्धिरिति ।

तृतीयपक्षे तु चक्रकमासज्यते–सिद्धे हि सामान्यस्य वैशिष्ट्ये विशिष्टविशेषेषु प्रतीतिहेतुत्वसिद्धिः, तस्यां सत्याम् 'अस्येदम्' इति प्रतीतिसिद्धिः, तस्याञ्च सत्यां तस्य वैशिष्ट्यसिद्धिरिति । ततः प्रमाणतो वस्तुव्यवस्थामिच्छता यद् यथा यत्र प्रतिभासते तत् तस्य सदृशेतररूपतया विषयोऽभ्युपगन्तव्यम् यथा चक्षुरादिप्रत्ययस्य नीलादिरूपतया प्रतिभासमानं रूपादि, सामान्यविशेषात्मकं प्रतिभासते च सामान्यविशेषात्मकं वस्तु, तस्मात्तदेव तच्छब्दानां विषयः, न पुनः सामान्यमात्रमिति ॥छ॥

एतेन विधिरेव वाक्यार्थ इति विधिवादिमतमप्यपास्तम् । ते हि ब्रुवते–विधिरेव वाक्यार्थः अप्रवृत्तप्रवर्त्तनस्वभावत्वात्तस्य । तदुक्तम्–"विधेर्लक्षणमेतावदप्रवृत्तप्रवर्त्तनम् ।" [ ] इति । तल्लक्षणे च विधौ वादिनां विप्रतिपत्तिः, तथाहि–वाक्यरूपः शब्द एव प्रवर्त्तकत्वाद्

विधिवादे विविधपक्षाः–

(१) शब्दात् । (२) अर्थापत्ति–आ० टि० । (३) शब्देन हि सामान्यं गृहीतं विशेषस्त्वर्थापत्त्या, किं लक्षणया ?–आ० टि० । (४) सामान्यप्रतिपत्ति । (५) सङ्केतस्मरण । (६) अर्थापत्तेरनुमानाद्वा । (७) सामान्यस्य । (८) अस्येदमिति प्रतीतिकृतं वा इति तृतीये विकल्पे । (९) विधेः । (१०) 'अनुष्ठेयं हि विषयं विधिः पुंसां प्रवर्त्तकः ।'–मी० श्लो० वाक्या० श्लो० २७४ । 'तत्राज्ञातार्थज्ञापको वेदभागो विधिः ।'–अर्थस० पृ० २९ । 'प्रवर्त्तकचिकीर्षाया हेतुधीविषयो विधिः ।'–शब्दश० का० १०१ । 'या हि विध्यर्थेन लिङा लोटा कृत्यैर्वाऽपूर्वोपदेशः क्रियते स विधिः ।'–युक्तिदी० पृ० २० । (११) 'ननु चाहुर्विधेर्लक्षणमेतावदप्रवृत्तप्रवर्त्तनम् । अतिप्रसङ्गदोषेण नाज्ञातज्ञापनं विधिः ॥'–न्यायम० पृ० ३४० ।

1 प्रतीयत एव व्य–श्र० । 2–सहकारि व्य–ब०, श्र० । 3 तदप्यसा–श्र० ब० । 4 प्रतिक्षेप्तव्यम् ब०, श्र० । 5 तत्रैव प्रवृ–ब०, श्र० । 6–हेतुत्वसिद्धिरिति तृतीय–ब० । 7 तस्याञ्च सत्यां तत्रैव तस्य प्रवृत्तिहेतुत्वसिद्धिरिति आ० । 8–मतमपास्तम ब० । 9 विधिलक्ष–ब० ।

विधिरित्येके । तद्व्यापारो भावनाऽपरपर्यायो विधिरित्यन्ये । नियोगरित्यपरे । प्रैषादय इत्येके । तिरस्कृततदुपाधिप्रवर्त्तनामात्रम् इत्यन्ये । प्रवर्त्तकत्वात् फलमेव इत्यपरे । फलाभिलाप एव इत्येके । कर्मैव इत्यन्ये । आत्मनोऽप्राप्तक्रियासम्बन्धावगम इत्यपरे । श्रेयःसाधनताख्यधर्म इत्येके । उपदेश इत्यन्ये । कर्त्तव्यताप्रतिपत्तिरेव इत्यपरे । प्रतिभैव इत्येके । भक्तिरेव इत्यन्य । इच्छैव इत्यपरे । प्रयत्न एव इत्येके इति ।

तत्र शब्दविधिवादिनो ब्रुवते–अन्वयव्यतिरेकाभ्यां प्रवर्त्तकत्वमवधार्यते, तौ च अत्र यथासिद्धौ शब्दस्यैव प्रवर्त्तकत्वमवगमयतः, अतः स एव विधिः । अर्थस्य विधित्वे "क्रियायाः प्रवर्त्तकं वचनम्" [ शाबरभा० १।१।२ ] इति विरुध्यते । प्रवर्त्तकार्थप्रतिपादनद्वारेण वचनस्य प्रवर्त्तकत्वे च औपचारिकं प्रवर्त्तकत्वमस्य स्यात्, मुख्यञ्च वस्तुवृत्त्या तत्र तत्प्रवर्त्तकत्वम् इत्यर्थनिरपेक्षमेवास्य तत्प्रतिपत्तव्यम् । व्यापारातिशयप्रवर्त्तकत्वपक्षेऽपि न शब्दस्य मुख्यप्रवर्त्तकत्वक्षतिः, व्यापारातिशयसमाश्रयणेनैव सर्वस्य साध्यवस्तुसम्पादकत्वात् । न खलु काष्ठादीनां ज्वालाद्यवान्तरव्यापारावलम्बनेऽपि पाके मुख्यं कारकत्वाभिधानं विरुध्यते । प्रवर्त्तकत्वञ्च यद्यपि सामान्येन शब्दस्योच्यते तथापि लिङ्लोट्तव्यप्रत्ययानामेव तद् युक्तं शब्दान्तराणां प्रवृत्तिहेतुत्वाऽदृष्टेः ।

अत्राचे[11] शब्दस्य विधित्वमसहमाना 'प्रमाणत्वात्, अनियमात्प्रवृत्तेः, संविदाश्रयणात्' इत्यादियुक्तिविरोधं दर्शयन्ति । तथाहि–प्रमाणत्वं तावत् प्रवर्त्तकाऽर्थाऽवबोध

(१) भाट्टाः । (२) प्राभाकराः । (३) परित्यक्तपुरुषादिविषय–आ० टि० । (४) शब्दस्य । (५) शब्दे । (६) प्रवर्त्तकत्वम् । (७) शब्दस्य । (८) प्रवर्त्तकत्वम् । (९) पंचमो –आ० टि० । पञ्चमो लकार इत्यर्थः । (१०) लोट् सप्तमी–आ० टि० । सप्तमो लकार इत्यर्थः । (११) मण्डनमिश्राद्यः । (१२) प्रमाणत्वादनियमात्प्रवृत्तेः संविदाश्रयात् । समभिव्याहृते शब्दो न विधिः कार्यकल्पनात् ॥ –विधिवि० पृ० ५ । तत्र शब्दः स्वरूपेण वायुवच्चत्प्रवर्त्तकः । प्रमाणत्वं विहन्येत नियमाच्च प्रवर्त्तयेत् ॥ –न्यायसु० पृ० २६ । (१३) प्रमाणं हि शब्दः प्रतिज्ञायते, बोधकञ्च प्रमाणम्, तत्र प्रवृत्तिहेतुकञ्चनार्थातिशयमवगमयन् शब्दस्तोत्पादत्वेन प्रमाणतामश्नुते स्वयमेव तु प्रवृत्तः कारकस्तां प्रमाणतामपजह्यात् । न हि कारको हेतुः प्रमाणमपि तु ज्ञापकः ।–प्रमाणं हि शब्दः प्रतिज्ञायते बोधनात्मकपणोऽर्थो धर्म इति । बोधकञ्च प्रमाणम् अबाधितानधिगतासंदिग्धार्थप्रमाजनकम् । स्वयमेव तु प्रवृत्तप्रमाया कारकः तां प्रमाणतामपजह्यात् । ननु प्रमाया अपि प्रवृत्ते कारकः कस्मान्न प्रमाणमत आह–नहि कारको हेतुः प्रमाणम् । माभूद बीजादीनामङ्कुरादिकारकाणां प्रामाण्यम् । किं तर्हि प्रमाणमित्याह–अपि तु ज्ञापकः इन्द्रियादौ तथा भावात् । –विधिवि०,टी० पृ० ५ । अत एव शब्दोऽपि न स्वरूपमात्रेण प्रवर्त्तकः वाय्वादितुल्यत्वप्रसङ्गात् । यदि पवन इव पिशाच इव कुणप इव शब्दः प्रवर्त्तको भवेत् अनवगतशब्दार्थसम्बन्धोऽपि श्रवणपरवशः प्रवर्त्तेत न चैवमस्ति । तस्मात्प्रतीतिमुपजनयन् शब्दस्य प्रवर्त्तकत्वम् । न च नाम लिङादिरेव शब्दः प्रवर्त्तकाभिधानद्वारेण प्रवर्त्तको भवितुमर्हति । शब्दस्य च ज्ञापकत्वाच्चक्षुरादिकारकवैलक्षण्ये सत्यपि प्रतीतिजन्मनि कारणत्वमपरिहार्यम् । कारणं च कारकम् कारकञ्च न निर्व्यापारं स्वकार्यनिर्वृत्तिसमर्थमिति व्यापारस्तस्यावश्यम्भावी –न्यायम० पृ० ३४२ ।

1 प्रैषणादय श्र० । 2 इत्यपरे ब० । 3 इत्येके तत्र श्र० ब० । 4–मवधार्यते तौ श्र० । 5 क्रियायो प्र–ज० । 6–पक्षोपि ब० । 7 साध्यवस्तु–आ० । 8 लिङ्लोट स य–आ० ब० ।

स्य विना स्वतः प्रवृत्तिकारकत्वे अस्य दुर्घटं वाय्वादिवत्, कारकहेतोः प्रमाणत्वानुपपत्तेः, बोधकस्यैव तत्सम्भवात्। अथोच्यते–वाय्वादिजनितभूतप्रवृत्तिविलक्षणैवेयम् इच्छादिसमानरूपा चिद्रूपात्मप्रवृत्तिः विषयावबोधापेक्षिणी [1]लिङादिभिः क्रियते, तन्न, प्रवृत्तिकारकत्वा[(1)]भ्युपगमे [2]परकारकाणामिव प्रामाण्यानुपपत्तेः। बोधकत्व[(2)]मात्रेणापि प्रामाण्ये वर्तमानापदेशकालप्रवर्तकलेडादियुक्तेष्वपि [(4)]वाक्येषु [(5)]तत्प्रसङ्गात् 'तेन प्रवर्तकं वाक्यं शास्त्रेऽस्मिंश्चोदनोच्यते।" [मी० श्लो० चोदनासू० श्लो० ३१] इत्यस्य विरोधः। तस्मात् साध्यस्वभावयागादिव्यापारलक्षणविषयावबोधकत्वेनैव लिङाद्यन्तस्य शब्दस्य प्रमाणत्वोपपत्तेः न शब्दस्य स्वरूपेणैव विधित्वम्।

तथा, अनियमात्प्रवृत्तेः, शब्दस्य हि विषयावबोधनिरपेक्षस्य स्वरूपेणैव विधित्वे चेतनामनस्यापि पुरुषस्य अभिप्रायतिरस्कारेण मन्त्रादिजन्यविक्षोभस्येव विवशस्य बलात्कारेण शब्दात्प्रवृत्तिरुद्भवन्ती न वाय्वादिजनितप्रवृत्तिवैलक्षण्यमश्नुवीत। तथा चास्यां हठादेव भवन्त्या पुरुषस्वातन्त्र्याश्रितविहिताऽकरणापराधनिबन्धनप्रायश्चित्तप्रतिपादनस्य निर्विषयत्वप्रसक्तेः अयुक्तमुक्तम्–

'अकुर्वन् विहितं कर्म निन्दितञ्च समाचरन्।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः॥" [मनुस्मृ० ११।४४] इति।

(१) प्रवर्तकत्वादप्रामाण्यम्, बोधकत्वाच्च प्रामाण्यमिति–आ० टि०। (२) किन्तु विशिष्टबोधकत्वेनैव प्रामाण्यम्–आ० टि०। "विषयावबोधनाच्च दोष इति चेत्; तन्मात्रस्यान्यत्रापि तुल्यत्वात्; चोदनालक्षणोऽर्थो धर्म इत्यभ्युपगमानर्थक्यात्। निराकरोमि, नेति। कुतः? तन्मात्रस्य अन्यत्रापि वर्तमानापदेशेऽपि यत्र पचतीत्यादौ तुल्यत्वात्। न हि तत्र भावना नावगम्यते। अस्तु तुल्यता, का नो हानिरित्यत आह–चोदनालक्षणोऽर्थो धर्म इत्यभ्युपगमानर्थक्यात्। प्रवर्तकस्य चोदनात्वं प्रवृत्तिहेतुः चोदनार्थोऽभिप्रायमवगमयन् अनेन रूपेण प्रामाण्यमश्नुते न भावनामात्रावधारणेन तस्य अन्यत्रापि तुल्यत्वात्। तस्माद्येन रूपेण प्रामाण्यं न तेन चोदना येन चोदना न तेन प्रामाण्यं तस्य प्रवृत्तिं प्रति कारकत्वात्।'–विधिवि०, टी० पृ० ६। (३) वर्तमान–आ० टि०। (४) यत्र पचतीत्यादिषु। (५) प्रामाण्यप्राप्तेः। (६) अग्निहोत्रं जुहुयादित्यादि। (७) 'हठादेवास्य च नियोगतोऽवश्यं प्रवृत्तिः स्यात्, तथा च अकुर्वन् विहितं कर्मेति निर्विषयं स्यात्। न हि सन्ति [illegible] अनुष्ठानस्य [illegible] प्रवृत्तिं प्रति पुरुषस्य।"–विधिवि० पृ० ६। (८) [illegible] पूर्विकायां प्रवृत्तौ। (९) पुरुषस्वातन्त्र्य [illegible] विहितस्य [illegible] अकरणात् प्रायश्चित्तं भवत् यदा तु पुरुषस्य प्रवृत्तौ स्वातन्त्र्यमेव नास्ति तदा [illegible] प्रायश्चित्तभाक्त्वम्। (१०) व्याख्या–'प्रसजंश्चेन्द्रियार्थेषु [illegible] नित्यं यद्विहितं सन्ध्योपासनादि नैमित्तिकञ्च [illegible] तदकुर्वन् तथा प्रतिषिद्धं [illegible] अविहितनिषिद्ध [illegible] मनुष्यः प्रायश्चित्तं समर्हति।'–मनुस्मृ० मन्वर्थ० ११।४४।

1 लिङादि–आ०, ब०। 2 परकारणा–आ०, ब०। 3–कत्वमात्रादि–ब०। 4 लिङाद्यन्त–आ० ब०। 5–विक्षोभस्येव ब० श्र०। 6 हठादेव श्र०। 7 भवन्त्यां ब०, श्र०। 8–कत्वं प्रा–ब०। 9–त्यानि–श्र०।

अभिधाया शब्दस्य लिङादेर्यासौ भावना पुरुषप्रवृत्त्युत्पत्तिं प्रति स्वकीयप्रयोजकव्यापारः तस्य अभिधायका लिङादयः । भाव्यनिष्ठश्च भावकव्यापारो भावना । शब्द-

---

त्वावधारणात् लक्षणया गमयन्तीत्यर्थः ।"–न्यायसु० पृ० ५५९ । जैमिनिन्या० पृ० ७५ । तन्त्ररह० पृ० ४७ । मानमेयो० पृ० २७२ । वैयाकरणभू० द० पृ० १५६ । मुक्ता० दिन० पृ० ५१५ । "अभिधीयत इति अभिधा प्रवर्तना कर्तव्यता वा सैव च पुरुषप्रवृत्तिं भावयतीति भावना तामाहुरिति । अथवा अभिधाया शब्दस्य भावना अभिधाभावना सैव प्रवर्तना यस्मात्तयैव शब्देन पुरुषः प्रवर्तयते तस्मिद्धये अभिधीयमाना शब्दव्यापारत्वेनोच्यते तामाहुरिति । अथवा इष्टसाधनताभिधानमभिधा सैव विधानं विधिरिति व्युत्पत्त्या विधिरित्युच्यते । सैव च भनिक्तत्त्वं प्रतिपद्यमानायाः पुरुषप्रवृत्तेः प्रयोजकस्य शब्दस्य व्यापारो भावना तामाहुः ।'–न्यायरत्नमा० पृ० ५३ । मीमांसान्याय० पृ० १८१ । उद्धृतोयम्–'शब्दात्मभावनामाहुः'–अष्टसह० पृ० १९ । तत्त्वार्थश्लो० पृ० २६२ । विधिवि० पृ० १५ । न्यायम० पृ० ३४३ । बृहदा० भा० वा० टी० पृ० ५९० । 'अभिधा भावना'–न्यायकु० प्र० ५।१३ । मीमांसार्थप्र० पृ० ८ । मीमांसान्याय० पृ० १८१ । शास्त्रदी० २।१।१ । न्यायरत्नमा० पृ० ४७ । मीमांसाबाल० पृ० ७५ ।

(१) 'तेन भूतिषु कर्तृत्वं प्रतिपन्नस्य वस्तुनः । प्रयोजकक्रियामाहुर्भावनां भावनाविदः ॥'–तन्त्रवा० २।१।१ । "इह हि लिङादियुक्तेषु वाक्येषु द्वे भावने गम्यते । शब्दात्मिका च अर्थात्मिका च । तत्र लिङादीनां प्रयोजककर्तृत्वं पुरुषः प्रयोज्यः, तेन किमित्यपेक्षायां पुरुषप्रवर्तनमिति सम्बध्यते । अयं तु यागस्तत्र लिङादिविषया क्रियोच्यते प्रवर्तयतीति ततः किमित्यपेक्षितं पुरुषमित्येव सम्बध्यते । अथ केनेत्यपेक्षिते पूर्वसम्बन्धानुभवापेक्षेण विधिज्ञानेनेति सम्बध्यते । कथमिति प्राशस्त्यज्ञानानुग्राही तेनेति । कुत एतत् ? बुद्धिपूर्वकारिणो हि पुरुषा यावत् प्रशस्तोऽयमिति नावबुध्यन्ते तावन्न प्रवर्तन्ते तत्र विधिविभक्तिरवसीदति ता प्राशस्त्यज्ञानमुपलभ्नाति । तच्च पुरुषार्थात्मकं फलात् सर्वस्य स्वयमेवानुष्ठानं भवतीति प्रसिद्धत्वान्न वेदादुत्पद्यमानमपेक्ष्यते । साधननिर्वर्तव्यतयास्तु अप्रवृत्तपुरुषनियोगाच्छास्त्रमेव प्राशस्त्यप्रतिपादनायावाङ्क्ष्यते ।"–तन्त्रवा० १।२।१ । न्यायसु० पृ० ३२– । 'भाव्यभावनसमर्थो हि व्यापारो भावना ।'–भावनावि० पृ० ६ । "भाव्योत्पादानुकूलस्य व्यापारस्य भावनात्वप्रसिद्धेः ।–न्यायसु० पृ० ३१ । 'भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः ।'–अर्थसं० पृ० ११ । "भवितुर्भवनानुकूलो भावकव्यापारविशेषः ।'–मीमांसान्याय० पृ० २ । "तत्र प्रवृत्त्यनुकूलो व्यापारोऽभिधा, फलानुकूलो व्यापारो भावनेति विवेकः ।–मीमांसार्थप्र० पृ० ८ । "भाव्यनिष्ठो भावकव्यापारो भावना । भाव्यं हि स्वर्गादिफलं साध्यमानत्वात् तन्निष्ठस्तदुत्पादकस्य पुरुषव्यापारो यस्य भावना व्यन्तेन भवतिनोच्यते । प्रकृत्यर्थस्य भवते कर्ता य स्वर्गादि स एव व्यन्तस्य कर्मतां प्रतिपद्यते । कर्ता स्वस्य प्रयोजकः पुरुषः णिजर्थाख्यः प्रयोजकव्यापारः पुरुषो हि भवन्तं स्वर्गादिमिव स्वव्यापारेण भावयति सम्पादयति, स तत्सम्पादको व्यापारो भावनेत्युच्यते ।'–न्यायम० पृ० ३३५ । भावनात्वं नाम भवितुः प्रयोजकव्यापारवत्त्वम् । तत्रार्थभावनायाः भवितुर्जायमानस्य स्वर्गादेः प्रयोजकव्यापारत्वात् लक्षणसङ्गतिः शब्दभावनायामपि पुरुषप्रवृत्तिरूपस्य भवितुः प्रयोजकव्यापारत्वाल्लक्षणसङ्गतिः'–मी० परि० पृ० २० । (२) तस्मादस्ति पुरुषप्रवृत्तिकर्मिका विधिज्ञानकरणिका अर्थवादोत्पादितविषयप्राशस्त्यज्ञाननिर्वर्तव्यतोपेता लिङादिव्यापारः प्रेरणात्मिका शब्दभावना अभिधानलक्षणोऽपि च देवदत्तादेरिव व्यापारः शब्दभावना ।'–भावनावि० टी० पृ० ९४ । 'तत्र पुरुषप्रयत्नानुकूलो भावयितुर्व्यापारविशेषः शाब्दी भावना । सा च लिङ्श्रवणेऽयं मां प्रवर्तयति मत्प्रवृत्त्यनुकूलव्यापारवानिति नियमेन प्रतीतेः । यद्यस्माच्छब्दान्नियमेन प्रतीयते तत्तस्य वाच्यम् यथा

---

1 भावनि–ब० ।

भावनायाश्च भाव्या पुरुषप्रवृत्तिः, प्रवृत्तिमान् वा पुरुषः । [1]प्राशस्त्याभिधानञ्च विना विधिशक्तिनिमित्तत्वमुपगतापि [2]प्रवर्त्तनाया न समर्था भवति । न हि 'इमा गाः क्रीणीष्व' इति शतकृत्वोऽप्युक्तः कश्चित् क्रेतुं प्रवर्त्तते यावत् 'घटोध्नी सम्पन्नक्षीरा' इत्यादि [4]प्राशस्त्यैज्ञानं न प्रवर्त्तते । अतः अर्थवादोपजनितप्राशस्त्यज्ञानसचिवा शब्दभावना प्रवर्त्तनाङ्गम् । सा च [6]त्र्यंशपरिपूर्णा भवति–'किम्, केन, कथम्' इति । किं भावयेत् ? स्वर्गम् । केन ? [5]दर्शपौर्णमासाभ्याम् । [6]कथम् इति ? इतिकर्त्तव्यता दर्शयति प्रयाजादिव्यापाररूपाम् । सेयं त्र्यंशपरिपूर्णा शब्दभावना फलभावनायां पुरुष

गामानयत्यस्मिन् वाक्ये गोशब्दस्य गोत्वम्, स च व्यापारविशेषो लौकिकवाक्ये पुरुषनिष्ठो भिन्नाय विशेषः वैदिकवाक्ये तु पुरुषाभावाल्लिङादिनिष्ठ एव । अत एव शाब्दी भावनेति व्यवह्रियते । –अर्थ स० प० ११–१३ । मीमांसान्याय० प० ३ १७८ । मीमांसान्यायप्र० पृ० ८ ।

(१) एतावता अर्थवादवाक्यानां माभूदप्रामाण्यमिति–आ० टि० । (२) प्रवर्त्तयन्ति धर्मस्य प्रवर्त्तन्ति प्रवर्त्तनाम् –विधिवि० प० २४३ । प्रवृत्तिहेतुभूतं प्रवर्त्तयितुर्धर्मं प्रवर्त्तना ।' –मीमांसाबाल० प० ७५ । मीमांसान्याय० प० १८० । (३) तुलना– लौकिकानि वाक्यानि भवन्तो विदाङ्कुर्वन्तु । तद्यथार्थं गौः क्रेतव्या देवदत्तीया । एषा हि बहुक्षीरा स्थप्रपत्या अनष्टप्रजा चेति ।' –शाबरभा० १।२।२० । (४) 'सा च भावनांशत्रयमपेक्षते साध्यं साधनमितिकर्त्तव्यतां च, किं भावयेत् केन भावयेत् कथं भावयेदिति । तत्र साध्याकाङ्क्षायां वक्ष्यमाणांशत्रयोपेता आर्थीभावना साध्यत्वेनान्वेति एकप्रत्ययगम्यत्वेन समानाभिधानश्रुतेः । सत्यामप्येकप्रत्ययगम्यत्वेऽपि अयोग्यत्वान्न साध्यत्वेनान्वयः । साधनाकाङ्क्षायां लिङादिज्ञानं करणत्वेनान्वेति, तस्य च करणत्वं न भावनोत्पादकत्वेन तत्पूर्वमपि तस्याः शब्दे सत्त्वात् किन्तु भावनाज्ञापकत्वेन शब्दभावनाभाव्यनिर्वर्तकत्वेन वा । इतिकर्त्तव्यताकाङ्क्षायाम् अर्थवादज्ञाप्यप्राशस्त्यमितिकर्त्तव्यतात्वेन अन्वेति ।' –अर्थस० प० १६–१८ । मीमांसान्याय० प० ३ । करणांशे विधिज्ञानं किमस्य परप्रवर्त्तनम् । इतिकर्त्तव्यता चात्र स्वप्रमादप्रशंसनम् ।' –बृहदा० भा० वा० प० ५९० । 'प्रवर्त्तनारूपलिङर्थायाश्च अभिधायामपि साध्यसाधनेतिकर्त्तव्यतारूपमंशत्रयमपेक्षितम् अन्यथा तस्य स्वरूपतः फलवद्वाक्यानामप्रवृत्तिप्रसङ्गात् । तत्र लिङादिविधिज्ञानं करणत्वेनान्वेति याग इव अर्थभावनायाम् । प्रवृत्तिश्च साध्यत्वेन स्वर्ग इव अर्थभावनायाम् । अर्थवादजन्य प्राशस्त्यज्ञानमितिकर्त्तव्यतात्वेन प्रयाजाद्यङ्गजातमिव अर्थभावनायाम् । तदुक्तम्–लिङाभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः । सम्बन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोपयुज्यते । –मीमांसान्याय० प० ९१ । प्ररोच्यतेऽनयेति प्ररोचना प्राशस्त्यज्ञानं तच्चाङ्गं फलोपकारिप्रयाजादिवत् –मीमांसाबाल० पृ० ८१ । मीमांसापरि० प० १८ । "तत्र किं भावयेत् केन भावयेत्कथं भावयेदित्याकाङ्क्षायां स्वर्गं भावयेत् यागेन भावयेत् अग्न्यन्वाधानप्रयाजाद्यनुष्ठानाभिरुपकारं सम्पाद्य भावयेदित्येव भाव्यकरणेतिकर्त्तव्यतासमर्पणेन आकाङ्क्षापूरणात् प्रकरणाम्नातं सकलं शब्दसन्दर्भं भावनावाचिन आख्यातस्यैव प्रपञ्चः । सा चाख्यातस्थवर्त्तिनी सेयमर्थभावनेत्युच्यते । सा सर्वापि शब्दभावनया भाव्या विधायको लिङादि करणम् अर्थवादसम्पादिता स्तुतिरितिकर्त्तव्यता । सेयं शब्दभावना लिङादिभिरेव गम्यते । अर्थभावना सर्वैराख्यातप्रत्ययैर्गम्यत इत्युक्तम् –जैमिनिन्या० प० ७६ । (५) अमावस्यायां क्रियमाणो यागविशेषो दर्शः पौर्णमास्याञ्च विधीयमानं यागानुष्ठानं पौर्णमास इति । (६) यज्ञे कर्त्तव्यताविशेष–आ० टि० । 'आरादुपकारकरूपा प्रयाजादि –न्यायरत्नमा० प० १२० । (७) आर्थीभावनायाम् ।

1–प्रवर्त्तमानया व । 2–मान् पुरु–आ० । 3–त्वमुपाग–आ० । 4–घटोध्नि स–ब –घटादिस –श्र० । 5 प्रशस्तज्ञान श्र० । 6 तत श्र० । 7 कथमिति कथमिति यमुपदर्शकसज्यता श्र ।

प्रवर्त्तयति । यद्यपि चेच्छास्मृत्यादयः पुरुषप्रवृत्तिहेतवः तथापि न तेषां मुख्यः प्रवर्त्तनाव्यपदेशः, शब्दभावनायास्तु साध्यावगतिकारित्वेन मूलभूतत्वात् मुख्यः । 'शब्दभावना' इति शब्दशब्देन शब्दधर्मतया व्यपदेशात्, यथा ग्रामादिदाने राज्ञो दातृत्वव्यपदेशो मुख्यः लाकुटिकादीनां तु राजादेशानुसारेण प्रवृत्तानामौपचारिकः एवमत्रापि । तदुक्तम्–

"सैाध्यते हेतुर्व्यापारः कथ्यते शब्दभावना ।
शब्दधर्मतयाख्यात कैर्यससूचितस्थिति ॥" [　　　]

तथा च शब्दभावनासद्भावे किं प्रमाणमिति पर्यनुयोगोऽनुपपन्नः, यथैव हि अर्थप्रतिपत्त्यन्यथानुपपत्त्या शब्दस्य अभिधात्मको व्यापारः परिकल्प (कल्प्य) ते तथा प्रवृत्त्यन्यथानुपपत्त्या लिङादेः प्रवर्त्तनात्मकोऽपीति । तत्र 'यजेत स्वर्गकामः' इत्यत्र द्वे भावने प्रतीयेते शब्दात्मिका पुरुषप्रेरणारूपा अर्थात्मिका च पुरुषव्यापाररूपा इति । तत्र लकारसामान्यस्यार्थः अर्थभावना । उक्तञ्च–

"ईय त्वन्यैव सर्वार्था सर्वाख्यातेषु गियते ।" [ तन्त्रवा० २।१।१ ] इति ।

पुरुषव्यापारस्य हि सर्वत्रार्थे नियमानत्वात् सर्वार्था अर्थभावना, 'यजते,

(१) लाकुटिकप्राया –आ० टि० । द्वारपालसदृशा इत्यर्थः । (२) इच्छास्मृत्यादीनाम् । (३) प्रवर्तनाव्यपदेशः । (४) लकुट-दण्डधारिणाम् द्वारपालादीनाम् । (५) पुरुषरूपेण कार्येण तस्याः स्थितिः सूच्यते–आ० टि० । (६) आख्यातविभक्ति –आ० टि० । (७) "प्रयोजनेच्छाजनितक्रियाविषयव्यापारः आर्थीभावना । सा चाख्यातत्वांशेनोच्यते आख्यातसामान्यस्य व्यापारवाचित्वात् । साध्यत्रयमपेक्षते साध्यं साधनमितिकर्तव्यताञ्च किं भावयेत्केन भावयेत्कथं भावयेदिति । तत्र साकांक्षायां स्वर्गादिफलं साध्यत्वेनान्वेति, इतिकर्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गजातमितिकर्तव्यतात्वेनान्वेति ।"–अर्थसं० पृ० १९ २३ । "प्रवृत्तिरेवार्थभावनेव –मीमांसाप्र० पृ० ९ । 'स्वर्गेच्छाजनितो यागविषयो यः प्रयत्नः स भावना । स एव चाख्यातांशेनोच्यते । यजते इत्याख्यातश्रवणे यागे यतते इति प्रतीतेर्जायमानत्वात् अतश्च प्रयत्न एवार्थी भावना । यथाहुः–(न्यायसु० पृ० ५७९) प्रयत्नव्यतिरिक्तार्थीभावना तु न शक्यते । वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते ॥ –मीमांसान्या० पृ० १८५ ८७ । (८) आर्थीभावना । "अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥"–तन्त्रवा० २।१।१ । बृहती० भा० वा० टी० पृ० ५९० । शास्त्रदी० २।१।१। न्यायसु० प्र० ५।१३ । जैमिनिन्या० पृ० ७५ । मीमांसाबाल० पृ० ७५ । 'सर्वाख्यातस्य गोचरा'–मीमांसाप्र० पृ० ८ । प्रकृतपाठः –अष्टस० पृ० १९ । तत्त्वार्थश्लो० पृ० २६२ । अर्थात्मा भावना त्वन्या सर्वत्राख्यातगोचरः ।'–तन्त्ररह० पृ० ४७ । मानमेयो० पृ० २७२ । 'सा चाख्यातस्य –व्याकरणभू० द० पृ० १५६ । मुक्ता० दिन० पृ० ५१५ । व्याख्या–"विधेयाया भावनायाः पुरुषार्थरूपफलान्यनिष्ठत्वसूचनाय इच्छायोनित्वं सूचयितुम् इच्छायाः अयमने णिजन्तात् यत इति न तु विवक्षायामेरजित्यच्प्रत्ययात्साम्येन अर्थिन पुरुषस्य अयशब्देन अभिधानात् भावनायाश्च पुरुषधर्मत्वात् धर्मधर्मिणोश्चात्यन्तं भेदाभावात् तादात्म्यं विवक्षित्वा अर्थात्मा चासौ भावना चेति विग्रहः कार्यः । अर्थात्मेति अर्थभावनापरिशिष्टत्वं शब्दभावनायाः सूचितम् ।"–न्यायसु० पृ० ५६० । (९) अनीनारो–आ० टि० । "यदा हि सर्वाख्यातानुवर्तिनी करोत्यर्थानुवाच्या पुरुषव्यापाररूपा भावनाऽवगता भवति, तदा तद्भिन्ना सामान्याख्यातव्यतिरिक्ता शब्दविशेषवाच्या विधिप्रतिषेधभूतभविष्यद्वर्तमानाद्यः प्रतीयन्ते । यथा च सर्वत्र सामान्यतः करा

1–धाने श्र० । 2 साध्यत्वहेतव्यापा–श्र० । 3–हेतुर्व्यापार आ० । 4 अभिधानात्मको ब० श्र० ।

अयजत, अयष्ट' इत्यादि सर्वाख्यातेषु च विद्यते । न हि तत्र पुम्प्रेरणारूपा शब्द-भावनाऽनुभूयते सिद्धस्य आत्मव्यापारस्य अर्थभावनापरपर्यायस्य अनुभवात् । लिङादि-विषये तु 'यजेत' इत्यादौ द्वयमनुभूयते–स्वार्थं लिप्समानो हि पुरुषः स्वव्यापारे याग-विधानलक्षणे प्रवर्तते इति अर्थभावना, तमयं लिङ् प्रवर्त्तयतीति शब्दभावना चेति ॥छ॥

तदेतद्भास्करादीनो मतमयुक्तम्, यतः शब्दस्य भावना, शब्द एव वा भावना शब्दभावना स्यात् ? प्रथमपक्षे शब्दस्य भावना प्रेरकत्वम्, तच्च प्रेषणाध्येषणरूपम्, तस्य चेतनात्मकपुरुषधर्मत्वात् कथं शब्देऽनुपचरितस्य सम्भवः ? तद्धर्माध्यासितपुरुष प्रयुक्ताद् वाक्यादेव हि शब्दे तत्सम्भाव्यते न मुख्यतः ।

किञ्च, प्रेर्यप्रेरकयोर्न निष्फला प्रवृत्तिः । किञ्चिद्धि स्वात्मनि परत्र वा अर्थानर्थप्राप्तिपरिहारादिप्रयोजनमभिसन्धाय कश्चित् प्रेरकः प्रेर्यश्च प्रसिद्धः । न चाचेतने शब्दे तदभिसन्धानं सम्भवति तत्कथं तस्य प्रेरकत्वम् ? मेघध्वनिप्रभञ्जनादेरिवार्थे अनभिप्रायस्यापि प्रेरकत्वे शब्दविधिवदनिषिद्धाऽशेषशब्दोपरि निपातः स्यात् ।

---

त्यर्थोऽवगम्यते । किं करोति ? पचति । किमकार्षीत् अपाक्षीत् । किं करिष्यति पक्ष्यति । किं कुर्यात् पचेत् । किञ्च कुर्यात् पचेदिति । –तन्त्रवा० २।१।१ ।

(१) आख्याते । (२) सिद्धकर्तृ क्रियावाचिन्याख्यातप्रत्यये सति । सामानाधिकरण्येन करोत्यर्थोऽवगम्यते ॥ तस्मात् धात्वर्थकर्तृव्यापारवचनानि करोत्यर्थवन्त्याख्यातानि । –तन्त्रवा० २।२।१ । (३) ननु तस्मात् न प्रयोगानिरूप्यत्वात् यथार्थानि पूर्वपक्षे । अप्रवृत्ते फलायोगात् रूपोक्तेर्व्याप्तिरिष्यते ॥ –विधिवि० पृ० १६ । असत्त्वादप्रवृत्तस्य नाभिधापि गरीयसी । बाधकस्य समानत्वात् परिशेषोऽपि दुर्लभः ॥' –न्यायकु० ५।१२ । (४) मन्त्रपुरस्सरा व्यापारणा प्रेषणम् निकृष्टविषयो नियोग इत्यर्थः । यत्पुनरभ्यर्हितं व्यापारयति तदध्येषणम् अभ्यर्हितविषयं प्रवर्त्तनमित्यर्थः । –शाबरभा० प्र० लं० का० प० २५७ । प्रवक्तृपुरुषापेक्षया ज्यायसा वक्त्रा प्रतिपाद्यमानं कार्यं प्रेषणमिति व्यपदिश्यते । समेन आमन्त्रणम् । हीनेनाध्येषणमिति । –प्रक० प० प० १८० । (५) न हि प्रेषणाध्येषणालक्षणा शब्दस्य व्यापारो निरूप्यते तस्य पुरुषधर्मत्वात् । न हि प्रेषणाध्येषणाभ्यनुज्ञालक्षण शब्दस्य प्रमाणो व्यापारो निरूप्यते । ननु शब्दोच्चारणानन्तरं तदवगमात् तनोक्तमिति कथं प्रेषणादिलक्षणः शब्दप्रयोगो न निरूप्यते इत्याह–तस्य पुरुषधर्मत्वात् । सत्यं शब्दविज्ञानानन्तरमुपलभ्यते । न त्वसौ शब्दस्य अभिप्रायधर्मत्वात् । प्रेषणादेः अचेतनत्वेन शब्दस्यासम्भवात् । –विधिवि०, टी० प० १६ । (६) शब्दस्य अचेतनत्वात् पुरुषाभिप्रायरूपा प्रेषणादयः उपचरिता एव सम्भाव्यन्ते न तु मुख्या इति । (७) प्रेषणाध्येषणादिधर्मात्मकपुरुष । (८) प्रेषणाध्येषणरूपम् । (९) न प्रवर्तनं पुरुषः प्रवर्तयतोऽपि शब्दस्यानतिरोधत्वात् । न हि सर्वस्मिन् प्रवर्तयितरि प्रवृत्तिः प्रेक्षावताम् अपि त्वनुविधेय । न चार्थानर्थप्राप्तिपरिहाराद्यनुविधानकारणं स्वाम्यादाविव शब्दे समस्ति । पश्चात्प्रवृत्तौ तद्व्ययम् । '–विधिवि० प० १८ । (१०) अर्थानर्थप्राप्तिपरिहारादिप्रयोजनानुसन्धानम् । (११) शब्दस्य । (१२) ' स्यादेतत् पवनादेरिव शब्दादि प्रेरयति परम् तद्वत्, [illegible] मन्यन्ते अप्रतीत[illegible]व्यापारस्यापि वाय्वादेरिव स्वभावेन प्रेरकत्वात् पूर्वोक्तदोषाभावाच्च । न [illegible] वायव [illegible] सत्यपि तद्व्यापारा भिधानमङ्गम् अनभिहितव्यापारस्य [illegible] वा [illegible] ।'–विधिवि० प० १८ । (१३) शब्दस्य । (१४

---

1 हि शब्दे न तत्स–

यते–एका परवशस्य, अन्या तु प्रेक्षापूर्वकारिणः । तत्राद्यपक्षे हठाद् यागादिकर्मणि बौद्धादेरपि प्रवृत्तिः शब्देन क्रियताम् पुरुषस्तत्र न्यायाभावात् । न खलु बलवज्जलप्रभञ्जनप्रेरितस्य स्थानान्तराभावे हठात्प्रवृत्तिर्निर्दृष्टा 'अनिच्छन्नप्यहं प्रभञ्जनाग्निना प्रेरितः प्रवर्त्ते' इति प्रतीतेः । द्वितीयपक्षे तु 'येनाहं शब्देन प्रवर्त्तितः स किं प्रवर्त्तनायोग्यो न वा' इति यावन्न प्रेक्षापूर्वकारी विमृशति तावन्न प्रवृत्तिं निष्पादयति । नहि 'शब्देनाहं प्रवर्त्तितः' इति 'अवश्यं प्रवर्त्ते' इत्यसौ शब्दमात्रे समाश्वसिति तत्कारित्वविरोधानुषङ्गात् । अतोऽपौरुषेयात् काकवासितप्रायात् शब्दात् कथं कस्यचित् प्रवृत्तिः स्यात् ? पौरुषेयस्यैव शब्दस्य प्रवर्त्तनायोग्यत्वोपपत्तेः । तत्प्रणेतुः कुतश्चिदाप्ततामवसाय प्रेक्षापूर्वकारिणः सद्वैद्योपदेशादिव निःशङ्कं प्रवृत्तिसम्भवात् । तस्मादपौरुषेयत्वे शब्दस्य पुरुषप्रवृत्तेरनङ्गत्वान्न 'शब्दस्य भावना–प्रवर्त्तनत्व शब्दभावना' इति पक्षो घटते ।

अथ शब्द एव भावना, तदप्यसाम्प्रतम्, शब्दस्वरूपमात्रस्य भावनास्वभावत्वे घटादिशब्देष्वपि भावनाप्रसङ्गात् तन्मात्रस्य अन्यायविशिष्टत्वात् । तथा च "लिङ्लोट्तव्यप्रत्ययप्रत्याख्या विधिः ।" [ ] इति वचो विरुध्यते । तदेव शब्दभावनास्वरूपस्य विचार्यमाणस्याऽव्यवस्थितेः कथं तया अर्थभावना भाव्येत ? यतो 'भाव्यनिष्ठो भावकव्यापारो भावना' इति सुव्यवस्थितं स्यात् । द्वैविध्योपवर्णनञ्चास्या गगनपुष्पसौरभव्यावर्णनान्न विशिष्यते । तन्न भावनारूपोऽपि विधिर्घटते ॥ छ ॥

अपरे पुनः नियोग एव प्रवृत्तिहेतुत्वाद् विधिः इत्याचक्षते । तत्र चानेकधा

(१) प्रेक्षापूर्वकारी । (२) अन्यथा–शब्दमात्रे समाश्वासे प्रेक्षापूर्वकारित्वविरोधात् । (३) 'अथ मतम्–अभिधैव भावना विधिर्लिङादेरेव इति अत्राप्युक्तं–प्रवृत्तं सर्वतोऽर्थे वा प्रसङ्गात् कायतो गतं । अस्थानाभिधानहेतोरभावाच्चाभिधैव न ।। विधिरित्यनुपपन्नम् । अभिधा चेद्विधिः सर्वशब्दानां स्वार्थमभिधेयेषु तदभावः इति घटादिशब्देभ्योऽपि प्रवृत्तिप्रसङ्गः अस्याविशेषात् ।'–विधिवि० पृ० २१ । (४) शब्दस्वरूपमात्रस्य । (५) लिङ्लोट्तव्यपञ्चमलकाराणां विधिर्वाच्यः ।'–न्यायसू० पृ० ५६० । लिङ्कृत्तलोट्तव्यप्रत्ययमात्रगता शब्दभावना –जैमिनिया० पृ० ७५ । (६) शब्दभावनया । (७) तुलना– यत्तावदुक्तं शब्दव्यापारः शब्दभावनेति, तत्र शब्दात्तद्व्यापारोऽनर्थान्तरभूतोऽर्थान्तरभूतो वा ?–अष्टसह० पृ० ३१ । तत्त्वार्थश्लो० पृ० २६२ । या तु शब्दभावनेव लिङाद्येव इति कौमारिलकृतिः सा तु प्रतीतिविसंवादादिप्रतिहता । न हि विधिवाक्यश्रवणात् पुरुषो लिङादिस्वव्यापारमभिधत्ते अतो मया प्रवर्तितव्यमिति मन्यते '–न्यायमञ्जरी० पृ० ३९८ । सन्मतिटी० पृ० ४८ । तस्माल्लिङादिजन्यबोधविषयाऽभिधाया इष्टसाधनत्वादिज्ञाननिरपेक्षाया प्रवर्तकत्वं नियुक्तिकमेव । –वैयाकरणभू० द० पृ० १५७ । (८) प्रभाकरमतानुयायिनः । (९) तुलना– कोऽयं नियोगो नाम ? निःशेषो नियोगो यागादौ युक्तिः निरवशेषो योगः नियोगः । निरवशेषत्वम् अयोगस्य मनागप्यभावात् अवश्यकर्तव्यता हि नियोगः । नियोगप्रामाणिका हि नियोगप्रतिपत्तिमात्रतः प्रवर्तन्ते । –प्रमाणवार्तिकालं० पृ० १४ । 'नियुक्तोऽहमनेन वाक्येनेति निरवशेषो योगः नियोगः तत्र मनागप्ययोगाशङ्काया असम्भवाभावात् । –तत्त्वार्थश्लो० पृ० २६१ । अष्टसह० पृ० ५ । यदपि दर्शनम्–प्रमाणान्तरागोचरः शब्दमात्रालम्बनो नियुक्तोऽस्मीति प्रत्यात्मवेदनीयः सुखान्वितः अपगमष्टकालत्रयी

1 तत्र पौरु–ब० । –रूपापि ज० –रूपोऽविधि–ब० ।

विप्रतिपत्ति –केचित् लिङादिप्रत्ययार्थो नियोग इत्यातिष्ठन्ते ।

"प्रत्ययार्थो नियोगश्च यत शुद्ध प्रतीयते ।
कार्यरूपश्च तेनात्र शुद्ध कार्यमसौ मत ॥" [प्रमाणवार्तिकाल० पृ० २९ ।]

इत्यभिधानात् । अन्ये तु प्रेरकत्वमेव नियोग इति ब्रुवते ।

"प्रेरणैव नियोगोऽत्र शुद्धा सर्वत्र गम्यते ।
नाप्रेरितो यत कश्चिन्नियुक्त सन् प्रपद्यत ॥" [प्रमाणवार्तिकाल० पृ २९ ।]

प्रेरणासहित कार्यं नियोग इति चापरे मन्यन्ते ।

"ममेद कार्यमित्येव ज्ञात पूर्वं यदा भवत् ।
स्वसिद्धौ प्रेरक तत्स्यादन्यथा तन्न सिद्ध्यति ॥" [प्रमाणवार्तिकाल० पृ० ३० ।]

कार्यसहिता प्रेरणा नियोग इति चान्ये ।

"प्रेर्यते पुरुषो नैव कार्येणेह विना क्वचित् ।
ततश्च प्रेरणा प्रोक्ता नियोग कार्यसङ्गता ॥" [प्रमाणवार्तिकाल० पृ० ३०]

---

लिङादीनामर्थो विधिरिति ।"–विधिवि० पृ० ४८ ।

(१) तुलना–"केषाञ्चिल्लिङादिप्रत्ययार्थ शुद्धोऽन्यनिरपेक्ष कार्यरूपो नियोग ।"–अष्टसह० पृ० ६ । तत्त्वार्थश्लो० पृ० २६१ । (२) "शब्दान्तराणि स्वार्थेषु व्युत्पद्यन्ते यथैव हि । आवापोद्वापभेदेन तथा कार्ये लिङादय ॥ लिङादियुक्तवाक्यश्रवण तद्भावभाविन्या प्रवृत्त्या विशिष्टकार्यावगमिमनुमाय वाक्यस्य तावद्धेतुतामध्यवस्यति । तत्रापि श्रूयमाण [illegible] शब्दांशनाभिहित इति विवेचन लिङाद्यावापेन कार्यावगमदर्शनात् तदुद्वापे चादर्शनात् [illegible] कार्यावगति कुर्वन्तीति शब्दान्तरवत् लिङादीना कार्यवाचकत्वव्युत्पत्तिसिद्धि [illegible] कार्यमेव हि सर्वत्र प्रवृत्तावेककारणम् । प्रवृत्त्यव्यभिचारित्वाल्लिङाद्यर्थोऽभिधीयते ॥ (पृ० १७० ) [illegible] वाक्यार्थत्व च युज्यते । वाक्य तदेव हि प्राह नियोज्यविषयान्वितम् ॥"–प्रक० पं० पृ० १८८ । "अत [illegible] कार्यपरत्व एव प्रमाणम् । [illegible] मानान्तरागोचरत्वात् अपूर्वमिति, [illegible] पुरुष नियुञ्जानो नियोग इति गीयते ।"–[illegible] रह० पृ० ६६ । "लिङादिप्रत्ययगम्यमान [illegible] नियोग ।"–न्यायम० पृ० ३५५ । (३) नियोग –आ० टि० । [illegible] यत शुद्ध प्रतीयते । कार्यरूपश्च तेनात्र शुद्ध कार्यमसौ मत ॥ [illegible] । प्रत्ययार्थो न तद्युक्त धात्वर्थ [illegible] शुद्ध कार्यं नियोगता ॥"–अष्टसह० पृ० ६ । [illegible] पृ० २९ । (४) "प्रेरणा शुद्धा इति पक्षे प्रेरणाया [illegible] पृ० २६१ । "तत्र शुद्धा प्रेरणा नियोग नियोज्येन नियोक्तव्य [illegible] इत्ययमाद्यो बोध । ततो बोध्यम् । [illegible] पूर्वविषयो द्वितीय इत्यादि प्रयातु –आ० टि० [illegible]–अष्टसह०, तत्त्वार्थश्लो० । (६) कार्यं मा क्रिया [illegible] । अन्न स्नानपानादिस्तुति– –प्रक० पं० [illegible] यावन्न यानि मे तत्र प्रवर्तिरनवदम हि ॥" प्रमाणवा० [illegible]–तत्त्वार्थश्लो० पृ० २६१ । (७) तुलना– [illegible] तत्त्वार्थश्लो० पृ० २६१ ।

कार्यस्यैव उपचारात् प्रवर्त्तकत्वं नियोग इत्यपरे ।

> "प्रेरणाविषय कार्य न च तत्प्रेरक स्वत ।
> व्यापारस्तु प्रमाणस्य प्रमेय उपचर्यत ॥" [प्रमाणवार्तिकाल० पृ० ३० ]

कार्यप्रेरणयो सम्बन्धो नियोग इत्यन्ये ।

> "प्रेरणा हि विना कार्य प्रेरिका नैव कस्यचित् ।
> कार्य वा प्रेरणायोग नियोगैस्तेन सम्मत ॥" [प्रमाणवार्तिकाल० पृ०३० ]

तत्समुदायो नियोग इत्येके ।

> "परस्पराविनाभूत द्वयमेतत् प्रतीयते ।
> नियोग समुदायोऽस्मात् कार्यप्रेरणयोर्मत ॥" [प्रमाणवार्तिकाल पृ० ३०]

तदुभयस्वभावविनिर्मुक्त परमात्मस्वभावो नियोग इति केचित् ।

> "सिद्धमेक यतो ब्रह्म गतमाम्नायत सदा ।
> सिद्धत्वेन न तत्कार्य प्रेरक कुत एव तत् ॥" [प्रमाणवार्तिकाल० पृ० ३०]

यन्त्रारूढो नियोग इत्यपरे ।

> "कामी यत्रैव य कश्चिन्नियोगे सति तत्र स ।
> विषयारूढमात्मान मन्यमान प्रवर्त्तत ॥" [ प्रमाणवार्तिकाल० पृ० ३ ]

भोग्यरूपो नियोग इत्यपर ।

> "ममेद भोग्यमित्येव भोग्यरूप प्रतीयते । ममत्वेन च विज्ञान भावत्वेन व्यवस्थितम् ॥
> स्वामित्वनाभिमानो हि भोक्तुयत्र भवदयम् । भोग्य तदेव विज्ञेय तदेव स्वं निरूप्यत ॥
> साध्यरूपतया यत्र ममदमिति गम्यते । तत्प्रसाध्येन रूपेण भोग्य स्व व्यपदिश्यत ॥
> सिद्धरूप हि यद् भोग्य न नियोग स तावता । साध्यत्वेनह भोग्यस्य प्रेरकत्वान्नियोगता ॥"
> [ प्रमाणवार्तिकाल० पृ० ३० । ]

पुरुष एव नियोग इति चापर ।

> "ममेद कार्यमित्येव मन्यते पुरुष सदा ।
> पुस कार्यविशिष्टत्व नियोगोऽस्य च वाच्यता ॥" [ प्रमाणवार्तिकाल० पृ० ३० । ] इति ।

(१) प्रवर्त्तकत्वम्–आ० टि० । (२) कार्यप्रेरणयो योग –तत्त्वार्थश्लो० । (३) विनिर्मुक्तम्–आ० टि० । (४) नानम–आ० टि० । (५) ज्ञातम्–आ० टि० । (६) यन्त्रारूढो दृष्टान्ततया यत्र स यन्त्रारूढो विषयारूढत्वाभिमानो नियोग इत्यर्थ । यजेत स्वर्गकाम इत्यतो यागारूढत्वाभिमानवान् स्वर्गकाम इति बोध । –अष्टसह० यशो० पृ० ४६ B । (७) स्वस्वामिभावो नाम्ति –आ० टि० । स्व निरूप्यते –प्रमाणवार्तिकाल० । (८) नियोग स्यादबाधित –तत्त्वार्थश्लो० । कार्यस्य सिद्धौ जातायां तद्युक्त पुरुष स्मृत । सर्वत्माधिन इत्येव पुमान् वाक्यार्थ उच्यते ॥ –प्रमाणवार्तिकाल० पृ० ३० । अष्टसह० पृ० ६ । तत्त्वार्थश्लो० पृ० २ ...

1 न तावत्प्रे–ब० मचतत्प्रे–श्र० । 2–विनिम ... ब० । 4 तदेव स्वं आ० । 5 निरुप्यते आ० ब । 6–ता ...

तदप्यविचारितरमणीयम्, यतो नियोज्यप्रेरणानिरपेक्षस्य[1] कार्यस्य नियोगरूपतोपगम्यते, तत्सापेक्षस्य वा ? तत्राद्यविकल्पोऽनुपपन्नः, तन्निरपेक्षस्य कार्यमात्रस्य अप्रवृत्तिहेतुतया नियोगत्वानुपपत्तेः । तत्सापेक्षस्य तु नियोगत्वे कथं कार्यस्यैव[2] नियोगरूपता ? त्रितयस्यापि प्रवृत्तिहेतुतया तद्रूपताप्रसङ्गात्[3] । 'प्रेरणा नियोगः' इत्यप्यनेनापास्तम्, नियोज्यादिनिरपेक्षायाः[4] प्रेरणायाः प्रलापमात्रतया नियोगरूपतानुपपत्तेः । प्रेरणासहितं कार्यं नियोगः, इत्यप्ययुक्तम्, नियोज्याभावे[5] नियोगस्यैवानुपपत्तेः । कार्यसहिता प्रेरणा नियोगः इत्यप्यनेनैव[6] निरस्तम् । कार्यस्यैवोपचारतः प्रवर्त्तकत्वं नियोगः, इत्यप्यसारम्, नियोज्यादिनिरपेक्षस्यास्य[7] प्रवर्त्तकत्वोपचारायोगात् । कार्यप्रेरणयोः सम्बन्धोऽपि[8] सम्बन्धिभ्योऽर्थान्तरभूतः सन्, अनर्थान्तरभूतो वा नियोगरूपतां प्रतिपद्यते ? न तावदर्थान्तरभूतः, तथाभूतस्य सम्बन्धस्यैवाऽसंभवतो नियोगरूपतानुपपत्तेः । सम्बन्ध्यात्मनोऽपि सम्बन्धस्य प्रेर्यमाणपुरुषनिरपेक्षस्य नियोगरूपतानुपपत्तिरेव । समुदायनियोगवादोऽप्यनेनैव प्रतिव्यूढः । कार्यप्रेरणादिनिर्मुक्तस्तु[9] नियोगो ब्रह्माद्वैतमवलम्बते, तच्च प्रागेव[10] कृतोत्तरम् । यत्पुनः 'स्वर्गकामः पुरुषोऽग्निहोत्रादिवाक्यनियोगे सति यागलक्षणं विषयमारूढमात्मानं मन्यमानः प्रवर्त्तते' इति यन्त्रारूढनियोगाभिधानम्, तदप्यचारु[11], अपौरुषेयवाक्ये नियोक्तृत्वस्य निराकृतत्वान्निराकरिष्यमाणत्वाच्च ।

(१) नियोज्य प्रेरणाञ्चानपेक्षमाणस्य–आ० टि० । तुलना– 'प्रेरणारहितं कार्यं नियोज्येन विवर्जितम् । नियोगो नैव कस्यापि नियोग इति कीर्त्यते ॥ यतिनियोगशब्दस्य शुद्धं कार्यं यदा मतम् । तदा मात्रान्नियोगत्वं भवत्येन नियाम्यते ॥ युक्तास्तु पुरुषे कार्यं यत्र नैव प्रतीयते ॥ नियोगः स कथं नाम सिद्धान्तीनां विरोधवान् ॥ नियोजकस्य धर्मोऽयं नियोगो लोकसम्मतः । तदेव कार्यमिति चेत्, सिद्धस्याभास्य साध्यता ॥ साध्यत्वेन नियोगोऽयमिति चेद्व्यपदिश्यते । विषये तस्य तत्त्वेनोपचारात् प्रकीर्तनम् । असिद्धस्य च तस्यास्तु कथं प्रेरकरूपता ॥ साध्यत्वेनावबोधोऽस्य प्रेरकत्वं यदीष्यते । अप्रसिद्धस्य साध्यत्वं बाधं सिद्धात्मकस्य च ॥ परस्परविरुद्धत्वमेकस्य कथमिष्यते । साध्यरूपतया तस्य प्रतीतिः प्रेरिका यदि । नियोगत्वं प्रतीतेः स्यान्न नियोगस्य तत्त्वतः ॥"–प्रमाणवार्तिकाल० पृ० ३२ ३३ । 'प्रेरणानियोज्यवर्जितस्य नियोगस्यासंभवात् । तस्मिन्नियागकरणे स्वकम्बलस्य कूर्दाल्किनिनामातरकरणमात्रं स्यात् ।"–तत्त्वार्थश्लो० पृ० २६५ । अष्टसह० पृ० ९ । (२) नियोज्यप्रेरणाकार्यरूपस्य–आ० टि० । (३) नियोगरूपता–आ० टि० । (४) "नियोज्यफलरहितायाः प्रेरणायाः प्रलापमात्रत्वात् ।'–तत्त्वार्थश्लो० पृ० २६५ । अष्टसह० पृ० १० । (५) "नियोज्यविरहे नियोगविरोधात् ।'–अष्टसह० पृ० १० । तत्त्वार्थश्लो० पृ० २६६ । (६) अत्रापि नियोज्याभावात्–आ० टि० । (७) "नियोज्यादिनिरपेक्षस्य कार्यस्य प्रवर्तकत्वोपचारायोगात्, कदाचित् क्वचित् परमार्थतस्तस्य तथानुपलम्भात् ।'–तत्त्वार्थश्लो० पृ० २६६ । अष्टसह० पृ० १० । (८) "ततो भिन्नस्य सम्बन्धस्य सम्बन्धिनिरपेक्षस्य नियोगत्वाघटनात् । सम्बन्ध्यात्मनः सम्बन्धस्य नियोगत्वमित्यपि दुरन्वयम्, प्रेर्यमाणपुरुषनिरपेक्षयोः सम्बन्ध्यात्मनोरपि कार्यप्रेरणयोर्नियोगत्वानुपपत्तेः ।'–अष्टसह० पृ० १० । तत्त्वार्थश्लो० पृ० २६६ । (९) सम्बन्धिभ्यो भिन्नस्य । (१०) पृ० १५० । (११) तुलना– 'यन्त्रारूढतया भोग्यभोक्त्रोः सम्बन्ध उच्यते । न सम्बन्धोऽस्ति भोग्यात्मा रूढश्च न नरस्तदा ॥ प्रतीतिकाले

1–क्ष निरपे–ब० । 2 नियोज्यनिर–आ० ।

सौगतमतानुसरणप्रसङ्ग । अथ तत्काले सोऽस्ति, एवमपि न नियोगो वाक्यार्थ, तस्य यागादिनिष्पादनार्थत्वात् । न चानयोस्तादात्म्ये स्वात्मैव स्वात्मनो निष्पादको युक्तो विरोधात्, निष्पन्नस्य यागादे पुनरपि निष्पादनविरोधाच्च । अथ तस्य किञ्चिदनिष्पन्न रूपमस्ति तन्निष्पादनार्थो नियोग, तर्हि तत्स्वभावो नियोगोऽप्यनिष्पन्न इति कथ वाक्यार्थ ? कल्पनारूढस्य वाक्यार्थत्वे स एव सौगतमतानुप्रवेश । फलस्वभावो नियोग, इत्यप्ययुक्तम्, नहि स्वर्गादिफल नियोगो घटते फलान्तरपरिकल्पनप्रसङ्गात्, निष्फलस्य नियोगस्यानुपपत्ते । फलान्तरस्य च फलस्वभावनियोगवादिना नियोगत्वापत्तौ तदन्यफलकल्पने अनवस्थाप्रसङ्ग । फलस्य च वाक्यकालेऽसन्निहितत्वात् तत्स्वभावो नियोगोऽप्यसन्निहित एवेति कथ वाक्यार्थ ? बुद्ध्यारूढस्य वाक्यार्थत्वे परमतप्रवेशप्रसङ्ग । 'नि स्वभावो नियोग' इत्यप्यनेन प्रत्युक्तम्, नि स्वभावस्यास्य अन्यापोहत्वानतिक्रमात् ।

किञ्च, अय नियोग प्रवर्त्तकस्वभाव, अप्रवर्त्तकस्वभावो वा ? प्रथमपक्षे प्रभाकरवत् सौगतादीनामपि प्रवर्त्तक स्यात् तस्य सर्वथा प्रवर्त्तकस्वभावत्वात् । तेषां विपर्यासान्नप्रवर्तक इति चेत्, न, 'भवतामपि विपर्यासात् प्रवर्तक' इत्यपि वक्तु सुशकत्वात् । अथाप्रवर्त्तकस्वभावोऽसौ, तर्हि सिद्धस्तस्य प्रवृत्तिहेतुत्वाभाव, स च वाक्यार्थत्वाभाव साधयति । न च अग्निष्टोमादिवाक्ये विषयादिपदार्थवाचकपदव्यतिरेकेण विषयफलयो मध्यवर्त्तिन तटस्थस्य वा नियोगस्य वाचक किञ्चित्पदमस्ति, यत सोपि विषयान्वित पदार्थता प्रतिपद्येत । न चापदार्थो वाक्यार्थो भवितुमर्हति, अन्यो-

(१) वाक्यप्रयोगकाले । तुलना–"अथ तद्वाक्यकाले विद्यमानोऽसौ, तर्हि न नियोगो वाक्यार्थ, तस्य यागादिनिष्पादनार्थत्वात, निष्पन्नस्य च यागादे पुनर्निष्पादनायोगात् । –अष्टसह० पृ० ८ । (२) नियोगस्य । (३) विषयनियोगयो –आ० टि० । (४) यागादे । (५) तुलना–'द्वितीय पक्षेऽपि नासौ नियोग, फलस्य भाव (भावि) त्वेन नियोगत्वाघटनात, तदा असन्निधानाच्च । तस्य वाक्यार्थत्वे निरालम्बनशब्दवादाश्रयणात् कुत प्रभाकरमतसिद्धि ?"–तत्त्वार्थश्लो० पृ० २६२ । अष्टसह० पृ० ८ । (६) सुगतमत । (७) "स हि प्रवर्तकस्वभावो वा स्यादतत्स्वभावो वा ?'–तत्त्वार्थश्लो० पृ० २६४ । अष्टसह० पृ० ८ । (८) तुलना–"नियुक्तेन निवृत्तिश्चेत् (?) सर्वस्यास्त प्रसज्यते । तत्स्वभावतया शश्वद्‌गमनाभावो न कस्यचित् ॥ स्वभावोऽपि विपर्यासाद् यथा यदि गम्यते । विपर्यासा विपर्यासव्यवस्था क करिष्यति ॥'–प्रमाणवार्तिकाल० पृ० १५१ । (९) नियोगस्य । (१०) सौगतादीनाम् । तुलना–'तेषां विपर्यासान्नप्रवर्तक इति चेत्, परेषामपि विपर्यासात् प्रवर्तकोऽस्तु । शक्यं हि वक्तुम्–प्राभाकरा विपर्यस्तत्वात् शब्दनियोगात् प्रवर्तन्ते नेतरे, तेषामविपर्यस्तत्वादिति । सौगतादयो विपर्यस्ता तन्मतस्य प्रमाणबाधितत्वात् न पुन प्राभाकरा इत्यपि पक्षपातमात्रम्, तन्मतस्यापि प्रमाणबाधितत्वाविशेषात् ।"–अष्टसह० पृ० ९ । तत्त्वार्थश्लो० पृ० २६४ । (११) प्रभाकराणामपि । (१२) तुलना–"पदार्थ एव वाक्यार्थो न च सोऽत्र प्रयोगोचर । तत्र पदार्थस्य पदार्थान्तरोपकल्पितं रूपस्य वाक्यार्थत्वाद्पदार्थत्वे तदनुपपत्ति ।'–विधिवि० पृ० ४९ ।

1–तानुसारेण प्र–आ० ब० । 2 थम कि–श्र० । 3 इत्यप्यनेन ब०, श्र० । 4 तथागता–श्र० । 5–स्वभावात् आ० । 6 इति वक्तु आ०, श्र० ।

न्यसापेक्षपदान्तरनिरपेक्षपदार्थसमुदायलक्षणत्वाद् वाक्यार्थस्य । तन्न नियोगोऽपि वाक्यार्थो घटते ॥छ॥

येऽपि प्रेषणाध्येषणाभ्यनुज्ञालक्षणं प्रयोक्तृधर्मं प्रवृत्तिहेतुत्वेन प्रसिद्धो विधिरित्योमनन्ति, तेऽप्यतत्त्वज्ञाः, पौरुषसम्भवश्चून्येषु वेदवाक्येषु पुरुषधर्मतया प्रसिद्धानां प्रेषणादीनाम् अत्यन्तासम्भवतो विधित्वकल्पनानुपपत्तेः । तत्र[३] तेषां कल्पने वा पौरुषेयत्वानुषङ्गाद् अपौरुषेयत्वकल्पनानुपपत्तिरिति एकं संधित्सोरन्यत् प्रच्यवते । असत्कारपूर्विका[४] हि व्यापारणा प्रेषणा उच्यते, सत्कारपूर्विका तु अध्येषणा, परेष्टस्य अप्रतिकूलवृत्तिरभ्यनुज्ञेति सर्वे एते प्रेषणादयः पुरुषगताशयविशेषस्वभावत्वाद् अपौरुषेयेषु वेदवाक्येषु न मनागपि सङ्गच्छन्ते इति ॥ छ ॥

अन्ये तु प्रैषादीनां प्रत्येकं व्यभिचारात् अनेकशक्तिकल्पनादोषाच्च सर्वत्राऽव्यभिचारिणः प्रवर्त्तनामात्रस्यैवास्य विधित्वमिति प्रतिपन्नाः, तेऽप्यसमीक्षिततत्त्वाः, निर्विशे-

(१) तत्र विधिः प्रेरणम् भृत्यादेर्निकृष्टस्य प्रवर्त्तनम् । निमन्त्रणं नियोगकरणम्, आवश्यके प्रेरणत्वम् । आमन्त्रणं कामचारानुज्ञा । अधीष्टः सत्कारपूर्वको व्यापारः । –व्याकरणभू० पृ० १४२ । (२) नैयायिकाअपि । विधिर्विधायकः । यद् वाक्यं विधायकं चोदकं स विधिः, विधिस्तु नियोगोऽनुज्ञा वा । यथा अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि ।'–न्यायभा० २।१।६३ । 'यद्वाक्यं विधत्ते इदं कुर्यादिति स नियोगः । अनुज्ञा तु यत्कर्त्तारमनुजानाति तदनुज्ञावाक्यम् ।' –न्यायवा० पृ० २६९ । 'विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः । अभिधेयोऽनुमेया तु कर्तुरिष्टाभ्युपायता ॥ प्रवृत्त्यादौ इत्यादिपदात् निवृत्तिः, विषयसप्तमीयम् तेन प्रवृत्तिनिवृत्तिविषय आप्ताभिप्रायो लिङर्थ इत्यर्थः । प्रवर्तकमिष्टसाधनताज्ञानमेव लिङर्थस्त्वाप्ताभिप्रायो लाघवादिति भावः । –न्यायकुसु०, प्रका० ५।१५ । (३) 'अपौरुषेये प्रेषणादिर्धर्मो नावकल्पते । लोके हि प्रवीणः प्रेषणाध्येषणाभ्यनुज्ञालक्षणोऽभिप्रायातिशयः प्रयोक्तृधर्मो लिङर्थः, तस्यापौरुषेयेषु वेदवाक्येष्वसम्भवः । प्रतीतेः सम्भव इति चेत्, न, पौरुषेयत्वापत्तेः ।'–विधिवि० पृ० २३ । आज्ञादिस्तु न वेदार्थः पुरुषधर्मत्वेन युज्यते ।"–न्यायसु० पृ० ३७ । (४) केन । (५) पुरुषाभिप्रायरूपाणां प्रेषणादीनाम् ।(६) द्रष्टव्यम्–पृ० ५८० टि० ४ । (७) मीमांसकवैयाकरणादयः । एतच्चतुष्टयानुगतप्रवर्त्तनात्वेन वाच्यता लाघवात् । उक्तञ्च–अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि । तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ॥ न्यायव्युत्पादनाय वा प्रपञ्चार्थमथापि वा । विध्यादीनामुपादानं चतुर्णामादितः कृतमिति । प्रवर्त्तनात्वञ्च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम् । तच्चेष्टसाधनत्वस्यास्ति इति तदेव विध्यर्थः । –व्याकरणभू० पृ० १४५ । 'तत्र च प्रैषादीनां विशेषाणां व्यभिचारित्वेन अवाच्यत्वात् सर्वानुयायिनः प्रवर्त्तनासामान्यस्य वाच्यत्वमवगतेः' –न्यायसु० पृ० ३० । 'तत्र आवापोद्वापाभ्यां प्रवर्त्तनायां विधिशक्तिमवधारयति । प्रवृत्त्यनुकूलो व्यापारः प्रवर्त्तना स च व्यापारः प्रैषादिरूपो विविध इति प्रत्येकं व्यभिचारित्वादनियताभिधानेऽवाच्यत्वानुपपत्तेः प्रवर्त्तनासामान्यमेव विधिवाच्यार्थमिति कल्पयति ।'–मीमांसान्याय० पृ० १८० । (८) 'न च प्रवर्त्तनामात्रमविशेषमवक्तव्यम् । यदपि मतम्–अनेकसामर्थ्यपरिकल्पनादोषाद् व्यभिचाराच्च प्रैषादीनामवाच्यत्वादव्यभिचारात्प्रवर्त्तनामात्रं लोके लिङर्थः तस्य वेदेऽप्युपपत्तिरिति, इदमप्यचतुरस्रम् निर्विशेषसामान्यायोगात् अवस्तुत्वे व्यापारानुपपत्तेश्च । न तावत् प्रैषादयो विशेषाः सम्भविनः । नाप्यन्यो विशेषः कश्चिदुपलभ्यते । तदुपादाने वा सामान्यस्याभिधानमस्मिन्नवसरे व्यर्थम् । तदेतदपास्तसकलभेदं प्रवर्त्तनासामान्यं शशशृङ्गमिव समुन्मिषद् स्यात् । प्रवर्त्तना च प्रवर्त्तयितुर्व्यापारः स तमन्तरेण नातिविराजते पुरुषस्याभावात् तदन्यस्य च प्रवर्त्तकत्वनिषेधात् प्रवर्त्तयितुरभावः । –विधिवि० पृ० २५-२६ ।

1–लक्षणप्रयो–आ० । 2–प्रेषणादीनां श्र० ।

पस्य सामान्यस्यैवाऽसम्भवात्। यथैव हि गण्डादिविशेषशून्य गोत्वादि न सम्भवति, एव परित्यक्तप्रैषादिविशेष प्रवर्त्तनामात्रमपि। वेदस्य चाऽपौरुषेयत्वाभ्युपगमे पुरुषगताशयविशेषस्वभावाना प्रैषादिविशेषाणामसम्भवात् का प्रवर्त्तनामात्रस्य सभावनापि ?

यच्चोक्तम्–'प्रैषादीना व्यभिचारात्' इत्यादि, तदयुक्तम्, यथासभव यथास्वरूपञ्च प्रवर्त्तकत्वाभ्युपगमात्। यदा हि प्रेषणात् प्रवर्त्तते तदा तस्या प्रवर्तकत्वम्, यदा तु अध्येषणातस्तदा तस्या इति। नहि 'कदाचिद्दीर्घा शुक्लादिस्वरूपास्तन्तव पटस्य जनका कदाचित्तु ह्रस्वा रक्तादिस्वभावा वा' इत्येतावता तन्तुव्यतिरिक्तस्यान्यस्यैव कस्यचित्पटोत्पत्ति प्रति उपादानकारणत्व युक्त प्रतीतिविरोधात्॥ छ॥

अन्ये त्वाहु–फल प्रवर्त्तकम्, तद्व्यापार प्रवर्त्तना। सर्वोऽपि हि प्रेक्षापूर्वकारी फलोद्देशेन प्रवर्त्तते, अत फलस्य प्रवर्त्तकत्वम्। प्रीत्यात्मकता तस्य प्रवृत्तौ व्यापार स एव च प्रवर्त्तना विधिरिति, तदप्यसङ्गतम्, फलस्य प्रवृत्तिहेतुत्वानुपपत्ते। नहि अवगतमपि फलम् अर्थिता विना प्रवृत्तिहेतु। सर्वस्य सर्वत्र प्रवृत्तिप्रसङ्गात्। अर्थिता च न फलस्य व्यापार, किन्तु प्रतिपत्तुरिच्छारूपतया तद्धर्मत्वात्। अथ फलस्य प्रीत्यात्मकत्वमन्तरेण इच्छाया एवानुत्पत्ते तदुत्पादनद्वारेण फलधर्मस्य प्रीत्यात्मकत्वस्य प्रवृत्तिहेतुत्वम्, नन्वेवमपि प्रीत्यात्मकत्वस्य फले एवाऽवस्थानात् तेनैव आत्मन प्रवृत्ति स्यात् न कर्मणि। अतोऽर्थान्तरत्वात्तस्य। नह्यन्यदभिलषितम् अन्यत्र

(१) पृ० ५८८ प० १०। (२) प्रेषणाया विधित्वे अध्येषणाया विधित्व न स्यात् अध्येषणाया विधित्वे च प्रेषणाया विधित्वाभाव इति परस्पर व्यभिचार। प्रेषणादिषु प्रत्येक शक्तिकल्पने गौरवमिति भाव। (३) जयन्तभट्टप्रभृतय। 'फलस्यवव्यमाणस्य पश्यन प्रेरकता मत। तस्मात्पुस प्रवृत्ती प्रभवति न विधिर्नापि शब्दो लिङादि। व्यापारोप्येतदीयो न हि पटुरभिधा भावनानामधेया॥ न श्रेय साधनत्व विधिविषयगत नापि रागादिरेव। तेनाप्यत्कामयमान फलममलमति प्रस्क सूत्रकार॥ क्वचिदसाक्षात्पदोपात्त कश्चित्प्रकरणागतम्। क्वचिन्नालोचनालभ्य फल सर्वत्र गम्यते॥ तस्मात्फलस्य साध्यत्वात् सर्वत्र तदवर्जनात्। क्रियादीनाञ्च तादर्थ्यात् तस्य वाक्यार्थतेष्यते॥ प्राधान्ययोगादथवा फलस्य वाक्यार्थता तत्र सता हि यत्न। प्रयोजन सूत्रकृता तदेव प्रवर्तकत्वेन किलोपदिष्टम्॥"–न्यायम० पृ० ३६२–६५। (४) "यदि मन्यते फल प्रवर्तक तद्व्यापार प्रवर्तना फलार्थिन पुरुषस्य तत्साधने प्रवृत्ते अन्यथाऽभावात्। न कश्चिद्व्यापारविशेष प्रवर्तना अपि तु प्रवृत्तिसमर्थ व्यापारमात्र च प्रयोजकव्यापार, भिक्षा वासयति कारीषोऽग्निरध्यापयतीति दर्शनात्, तदसत्, अर्थिता व्यापृति पुसो नियमनिबन्धन। फलसाधनता कर्मनिश्चेया साध्यता कदा॥"–विधिवि० पृ० २६। (५) आत्मन – आ० टि०। (६) पुरुषधर्मत्वात्। "फलार्थिता चेत् प्रवृत्तिहेतु, सेच्छा तद्योगो वा इच्छासमवायो वा 'कृत्तद्धितसमासेषु सम्बन्धाभिधानं त्वतल्भ्याम्' इति वचनात् पुरुषधर्म इति न फल व्यापृति। –विधिवि० पृ० २७। (७) 'अथ तदिच्छोपहारमुखेन फलस्य प्रवृत्तिहेतुधर्म प्रीत्यात्मता फलव्यापार प्रवर्तना सापि तत्रैव न कर्मणि। फलव्यापाराच्च प्रवर्तमान सर्वत्र प्रवर्तेत नियमनिमित्ताभावात्। –विधिवि० पृ० २७। (८) इच्छोत्पादनमुखेन। (९) सूरि–आ० टि०। (१०) फले एव। (११) फलात्–आ० टि०। (१२) कर्मण–आ० टि० (१३) फलम्। (१४) कर्मणि यागादौ।

1 सामान्यस्यासम्भ–श्र०। 2–युक्तं यथास्व–व०।

प्रवृत्तिः अतिप्रसङ्गात्। अथाऽभिप्रेतफलसाधनत्वात् कर्मण्येव प्रवृत्तेर्नातिप्रसङ्गः, न खलु प्रेक्षापूर्वकारिणः उपायं परित्यज्य अनुपायेऽसाधने वा साध्ये प्रवर्त्तन्ते, कथमेवं फलस्य प्रवर्त्तकता तत्साधनस्यैव तत्प्रसङ्गात्।

ननु नियतकर्मसाध्यतायाः फलसमवेतायाः प्रवृत्तिहेतुत्वात् फलस्य प्रवर्त्तकत्वम्, नियते च उपायभूते कर्मणि प्रवृत्तिरविरुद्धा; ननु केयं तत्साध्यता फलस्य स्वरूपम्, शक्तिभेदो वा ? यदि स्वरूपम्, तदा तस्य सत्त्वाविशेषात् नियतकर्मणीव अर्थान्तरेऽपि प्रवृत्तिः स्यात्। नहि तृप्तिः भुज्यपेक्षयैव तृप्तिर्भवति नान्यपेक्षया इति, तृप्त्यर्थिना अन्नादावपि प्रवर्त्तितव्यम्। शक्तिभेदोऽपि फलस्य स्वसत्त्वकाले, अभावकाले वा स्यात् ? तत्राद्यविकल्पोऽयुक्तः, यतः प्रतिनियतादेव कर्मणः प्रतिनियतस्य फलस्योत्पत्त्यर्थं तच्छक्तिभेदः परिकल्प्यते। न चोत्पन्नस्य सम्बन्धिनी शक्तिः उत्पादनियमे समुपयुज्यते। न खलु उत्पन्नं शक्तिवशादुत्पद्यते विरोधात्। द्वितीयविकल्पोऽप्यसुन्दरः, नहि फलमविद्यमानं खपुष्पप्रख्यं साध्यताख्यशक्तिभेदाश्रयो भवितुमर्हति। तदाश्रयत्वे वा तस्याऽसत्त्वविरोधः, असतः सकलशक्तिविरहलक्षणत्वात्।

किञ्च, इदं फलं विद्यमानं सत् पुरुषं प्रेरयति, अविद्यमानं वा ? यदि विद्य-

(१) "तत्साधनत्वात् कर्मण्येव प्रवर्तते न सर्वत्र अत एव तर्हि तत्साधनत्वं प्रवृत्तिहेतुः कर्मणि न फलरूपम् तच्च कर्मसमवायीति कर्म प्रवर्तकं स्यात्। चोदयति–तत्साधनत्वात् कर्मण्येव प्रवर्तते सर्वत्र सर्वेषां फलसाधनत्वाभावात्। परिहरति–अत एव तत्साधनत्वे सति प्रवृत्तिभावादेव। भवतु तर्हि तत्साधनत्वं प्रवृत्तिहेतुः कर्मणि न फलरूपम्। भवतु को दोषः ? इत्यत आह–ततश्च कर्मसमवायि न फलसमवायीति कर्मैव प्रवर्तकं स्यात्।"–विधिवि०, टी० पृ० २७-२८। (२) फलसाधनभूतस्य यागस्यैव प्रवर्त्तकत्वं स्यात् यागस्य तत्साधनत्वे निश्चिते सत्येव प्रवृत्तिदर्शनात्। (३) एवं तर्हि तत्साध्यता प्रवृत्तिहेतुः सा च फलसमवायिनीति न दोषः तथाहि समभिलषितस्य तृप्त्यादेः कर्मविशेषणं साध्यत्वाख्यमेव प्रवर्तते। का पुनरियं साध्यता ? यदि रूपं फलस्य सर्वत्र प्रवृत्तिप्रसङ्गः। एतदुक्तं भवति–फलसमवायिन्यपि साध्यता साधनाधीननिरूपणतया साधनमपि गोचरयति न पुनः साधनमपि तेनैव तस्मान्नियतं साधने एव प्रवर्तयति न तु सर्वत्रेति। तदेतद् दूषयति–का पुनरियं साध्यता ? यदि रूपं फलस्य तत्स्वरूपस्य साधनाधीननिरूपणत्वाभावात् न साधने प्रवर्त्तयेत् प्रवर्तयेद्वा सर्वत्रैव अन्यत्वाविशेषात्।–विधिवि० टी० पृ० २८। (४) ज्योतिष्टोमादियागजन्यता हि स्वर्गादिफलसमवायिनी अतः वस्तुतः यागसाध्यतायाः प्रवृत्तिहेतुत्वे फलस्यैव प्रवर्तकत्वं फलितमिति भावः। (५) नियतकर्मसाध्यता। (६) फलभूतस्वर्गस्वरूपस्य। (७) ज्योतिष्टोमादिवत्। (८) गोवधादौ–आ० टि०। (९) शक्तिविशेषः। (१०) "का पुनरियं शक्तिभेदः साध्यताभिधानः ? फलस्य भावसमये न तावत् तदपर्यालोचनप्रवृत्तिहेतुत्वाच्च। न खलूत्पन्नस्योत्पादं यद्योगिनो शक्तिरपेक्षते। नापि सिद्धे फले तत्साधने कश्चित्प्रवर्तते।"–विधिवि० पृ० २९। (११) उत्पन्नस्य उत्पत्तिविरोधात् अनुत्पन्नस्यैव हि समुत्पादो दृश्यते। (१२) अभावकालेऽप्यसतः कथं शक्तिमत् खपुष्पवत्–विधिवि० पृ० २९। (१३) साध्यतारूपशक्तिविशेषाधारत्वे। (१४) फलस्य। (१५) शक्त्याधारत्वे सत्त्वमेव स्यादिति भावः।

1–साध्यतया प्रवृत्ति–श्र०। 2 तच्छक्ति–श्र०। 3 नहि भु–श्र०। 4 स्वसत्ताकाले श्र०, ब०। 5 साध्यताशक्ति–श्र० ब०। 6 तदाश्रयसत्त्वे वा ब०। 7 ततः श्र०।

मानम्, किमर्थं प्रेरयति ? फलार्थी हि पुरुषः प्रवर्त्तते, तच्चेद् विद्यते, अलं प्रवृत्त्या। नहि लोके यस्य यन्नास्ति स तदर्थं पुनः प्रवर्त्तते इति प्रतीतम्, प्रवृत्त्यनुपरमप्रसङ्गात्। सतोऽपि फलस्य आत्मसम्बन्धिता कर्त्तुं प्रवर्त्तते, इत्यप्ययुक्तम्; यतः फलं सुखम्, दुःखाभावश्च, तदुभयमप्युपजायमानम् आत्मसम्बद्धमेवोपजायते। अथ स्वर्गकामः पुरुषः स्वर्गादेः फलस्य विद्यमानस्यैव आत्मसम्बद्धतां कर्त्तुं प्रवर्त्तते, नन्वेवं पुत्रकामेष्टौ का वार्त्ता ? नहि पुत्रादिफलस्य तदा विद्यमानता सम्भवति प्रतीतिविरोधात्।

किञ्च, इदं फलं सत्तामात्रेण प्रवृत्तिहेतुः, साध्यताविशिष्टं वा ? प्रथमपक्षे सिद्धेऽपि फले पुरुषप्रवृत्तिहेतुत्वं स्यात्, सत्तामात्रस्य तत्राप्यविशेषात्। न च सिद्धस्य सिद्धये प्रेक्षावतां प्रवृत्तिर्युक्ता तन्नुपरमप्रसङ्गात्। अथ साध्यतावच्छिन्नं फलं प्रवृत्ति-हेतुर्न केवलम्; तदप्यनुपपन्नम्, अनर्थिनोऽप्यर्थे प्रवृत्तिप्रसङ्गात्। फलं हि साध्यतया विशिष्टं प्रतीयमानं यदि प्रतिपत्तारं प्रवर्त्तयति तत्र अनर्थिनमपि प्रवर्त्तयेत्तदविशेषात्। तत्र विद्यमानस्यास्य प्रेरकत्वं युक्तम्। नाप्यविद्यमानस्य, असतः कारकत्वानुपपत्तेः, 'असच्च प्रेरकञ्च' इति विप्रतिषेधात्॥ छ॥

येऽपि 'फलाभिलाष एव पुरुषगतः प्रेरकत्वाद् विधिः, अनर्थिनः प्रवृत्त्यप्रतीतेः, स हि सन्निधानमन्तरेणापि क्वचिदभिलषिते वस्तुनि अर्थिनं पुरुषं प्रवर्त्तयति' इत्याचक्षते, तेऽप्यसमीक्षिताभिधायिनः, अभिलाषस्य अव्यापकतया प्रवृत्त्यङ्गतानुपपत्तेः। तदव्यापकता च बालकप्रवृत्तौ तत्सम्भवात्सुप्रसिद्धा। तथाहि–कश्चिदाचार्यप्रेरितो बालकः कार्यं किमपि कुर्वन् केनचित् प्रयोजनं पृष्टः सन्नुत्तरमाह–'न वेद्मि करणे अस्य किमपि प्रयोजनम्, केवलमाचार्यप्रेरितः करोमि' इति। ततः फलाभिलाषमन्तरेणापि पुरुष-प्रवृत्तिप्रतीतेः अव्यापकः सर्वप्रवर्त्तनानां फलाभिलाषः॥ छ॥

अन्ये तु 'कर्मैव अभिमतार्थप्रसाधकत्वाद् विधिः' इति प्रतिपन्नाः, तन्मतमप्य-सङ्गतम्, कर्मणो विधिविषयतया विधिस्वभावत्वानुपपत्तेः। विधेर्विषयो हि कर्म

(१) फलं स्वर्गादि। (२) निष्पन्नेऽपि फले प्रवृत्तौ प्रवृत्त्यनुपरमः स्यात्। (३) पुत्रकामनया क्रियमाणे पुत्रेष्टियज्ञे न हि पुत्रः स्वर्गादिवत् विद्यमानोऽस्ति। (४) प्रवृत्त्यविरामप्रसङ्गात्। (५) अर्थितारहितम्–आ० टि०। (६) साध्यतावच्छिन्नात् फलात्। (७) अविद्यमानफलस्य। (८) असत्त्वात्। (९) प्रेरकत्वे सत्त्वमेव स्यादिति भावः। (१०) पुरुषनिष्ठः। (११) 'अस्तु तर्हि कर्म प्रवर्तकम्, अभिमतसाधनता तस्य प्रवर्तना प्रवृत्तिहेतुरूपत्वात्, न विषयत्वात्। तन्तद् दूषयति न तस्य विषयत्वात्, प्रवृत्तिकर्तुः प्रयोजकः प्रवर्तकः। सिद्धश्च स भवति। तर्हि सिद्धं चेत् कर्म प्रवर्ते प्राक् प्रवृत्तेः भावनाया विषयो न भाव्यम्। न जातु गगनमस्या भाव्यं भवितुमर्हति। विषयश्चेत् कर्म असिद्धत्वात् कथं प्रवर्तकमित्यर्थः।'–विधिवि०, टी० पृ० ३५। (१२) न हि घटस्य ज्ञानविषयत्वे ज्ञानस्वभावता युक्ता–आ० टि०।

1 अर्थिनोऽ–आ०। 2 अर्थिनमपि आ०। 3–येदविशे–श्र०, ब०। 4–मानस्य प्रेर–आ०। 5 विधिविष–श्र०, विधिविष–ब०।

लोके प्रसिद्धं न तत्स्वभावम्, अतोऽन्येनात्र प्रवर्त्तकेन हि भवितव्यम्। नहि स्वस्यैव स्वात्मसिद्ध्यर्थं प्रवर्त्तकत्वं युक्तं विरोधात्।

किञ्च, उत्पन्नं कर्म आत्मसिद्ध्यर्थं पुरुषं प्रवर्त्तयति, अनुत्पन्नं वा ? तत्र उत्पन्नस्य स्वरूपसिद्धेर्जातत्वात् पुरुषप्रेरणा व्यर्था। अनुत्पन्नस्य तु प्रेरकत्वानुपपत्तिः। सदेव हि किञ्चित् कस्यचित्प्रेरकं नासत् खरविषाणादिकम्, तथाविधस्य कारकत्वायोगात्। असता चानेन सह अपौरुषेयवचसः सम्बन्धासम्भवात् कथं तद् वेदवाक्यैः प्रतिपाद्येत यतः पुरुषप्रवृत्तिहेतुत्वात् तद् वाक्यार्थः स्यात्। अथ सामान्याकारेण सत् कर्म विशेषाकारसम्पादनाय पुरुषं प्रेरयति; तन्न; येनांशेन तत् सत् तेनांशेन पुरुषासाध्यम्, येन चांशेन साध्यं न तेन तद्वेदाभिधेयं सम्बन्धासम्भवात्। नहि सम्बन्धोऽभिधेयाभिधानानां नित्यत्वाभ्युपगमे अनित्ये कर्मविशेषे नित्यस्य सम्बन्धस्य सम्भावनापि सम्भवति। लक्षणया तत्प्रतिपत्तिः, इत्यप्ययुक्तम्; तस्याः स्वतन्त्रशब्दार्थनिरूपणावसरे निरस्तत्वात् ॥ छ ॥

अथ आत्मनोऽप्राप्तक्रियासम्बन्धप्रतिपत्तिः प्रवर्त्तकत्वाद् विधिः, 'तवेदं कर्म' इत्युक्ते हि क्रियासम्बन्धमात्मन्यवगम्य प्रवर्त्तमानाः प्रतीयन्ते लौकिका इति; तदप्ययुक्तम्; नहि क्रियासम्बन्धप्रतिपत्तिमात्रेण प्रवृत्तिर्लोके प्रतीयते, अपि तु तदनुरोधितया, अन्यथा सर्वस्यैव 'तवेदं कर्म' इति कर्मसम्बन्धप्रतिपत्तिमात्रेण प्रवृत्तिः प्रसज्येत,

(१) विधिस्वभावम्। (२) कर्मणि यागादौ। (३) अस्य प्रवृत्तिक्रियायाः कर्तृत्वरूपस्य प्रवर्त्तकत्वस्य असम्भवात्। (४) कर्मणा। (५) याग इति–आ० टि०। (६) शरीरादि –आ० टि०। (७) सामान्येन–आ० टि०। (८) विशेषरूपेण–आ० टि०। (९) वेदवाक्येनाभिधेयम्। (१०) शब्दार्थानाम्। (११) ननु विधिलिङादिवाक्यानाम्युपगमात् तदुच्चारणात् प्रागसिद्धत्वे सति अगृहीतसम्बन्धत्वेन वाच्यत्वायोगाल्लिङाद्युच्चारणात् प्रागेव सिद्धं तत्तत्त्वं न युक्तमित्याशङ्क्य शब्दश्रवणानन्तरभाविप्रवृत्तिहेतुप्रेषणाध्येषणादिव्यापारानुवृत्तप्रवर्त्तनासामान्याभिधानेन तद्विशेषाणां सामर्थ्यपोषणे पुरुषधर्मस्य प्रेषणादेरसम्भवात् तद्व्यतिरिक्तविध्याख्यस्य विशेषस्य परिशेषाल्लक्षणया गम्यमानस्य सम्बन्धग्रहणानपेक्षत्वेन प्राक् सिद्धत्वनपेक्षणादनिरुद्धा शब्दव्यापारतेति'–न्यायसु० पृ० ५५९ तथा पृ० ३०। मीमांसान्याय० पृ० १८०। (१२) विधिः। (१३) लक्षणायाः। (१४) सम्बन्धवत्। (१५) पृ० ५७०। (१६) यदपि समर्थनम्–अप्राप्तसम्बन्धया क्रियया आत्मनः सम्बन्धस्य प्रतीत्या प्रवर्त्तते यथाऽद्य तवेदं कर्मेति लोके। अतश्च अज्ञातज्ञापनमप्रवृत्तप्रवर्त्तनमुभयविधप्राप्तिप्रतिषेधेन अप्राप्तक्रियाननुसम्बन्धो विधिरिति विधिविवेकोद्गारः। –विधिवि० पृ० ४०। (१७) "नन्वसारम् यस्मात्–न प्रवृत्तियोगधियो लोकेऽभिप्रायवर्त्तनात्। यथा भवेत्तथा काम किं मुधैव प्रयस्यति॥ प्रतिपद्यन्ते नामायमात्मनः क्रियायोगं नञ्जानते च तथाभावे तथेति निश्चिन्वन्तु विपर्यये न तदेवमिति। प्रवर्त्तते तु कस्मात् ? शाके त्वद्य तवेदं कर्मेति वचनादधिगतवक्त्रभिप्रायो यो यदभिप्रायानुरोधी स प्रवर्त्तितुमर्हति अन्यथा सर्वस्य प्रवृत्तिः।'–विधिवि० पृ० ४१–४२। (१८) वाक्यप्रयोक्तृपुरुषस्य अभिप्रायानुरोधात् प्रवृत्तिर्भवति अतः अभिप्रायानुरोध एव विध्यर्थः स्यादिति भावः।

1–तत्रैव भवि–श्र० ब०। 2 सह पौरु–श्र०। 3 तवेदं कर्म श्र०। 4 तदविरोधितया ब०। 5 तवेदं कर्म श्र०।

विधायित्वात्, यदित्थं तदित्थं यथा घटः, तथा च शब्दः, तस्मात्तथेति । नचेदमप्यसिद्धम्, ताल्वादिकारणव्यापारे सत्येव अस्यात्मलाभोपलम्भात् तदभावे चानुपलम्भात् मृद्दण्डादिकारणव्यापारभावाभावयोः घटस्य आत्मलाभाऽलाभोपलम्भवत् । न च तद्व्यापारे तदभिव्यक्तेरेव आत्मलाभो न शब्दस्य इत्यभिधातव्यम्, तस्याः प्रागेव प्रपञ्चतोऽपास्तत्वादिति ॥७॥

तदेवं वर्णानां पौरुषेयत्वप्रसिद्धौ पदवाक्यानामनायासेन तत्प्रसिद्धिरिति तदात्मकत्वात्तेषाम् । ननु लौकिकानां तेषां तत्सिद्धिः न वैदिकानामिति चेत्; न, तद्वत्तत्रैवान्यथाप्रतीतेः । "य एव हि लौकिकाः शब्दाः त एव वैदिकाः" [शाबरभा० १।३।३०] इत्यभ्युपगमव्याघातप्रसङ्गाच्च । तदपौरुषेयत्वप्रसाधकप्रमाणाभावाच्च, न च तदभावोऽसिद्धः, यतः तत्प्रसाधकं प्रमाणं प्रत्यक्षम्, अन्यद्वा भवेत् ? न तावत्प्रत्यक्षम्, तस्य शब्दस्वरूपमात्रग्रहणे चरितार्थत्वेन तत्पौरुषेयत्वाऽपौरुषेयत्वग्राहकत्वाऽसंभवात् ।

---

क्तिकारणमित्यत आह–ऐन्द्रियकत्वात् इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः । किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत् अथ संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यत इति ? संयोगनिवृत्तौ शब्दग्रहणान्न व्यञ्जकेन समानदेशस्य ग्रहणम् । दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते न च व्यञ्जकाभावे व्यङ्ग्यग्रहणं भवति तस्मान्न व्यञ्जकः संयोगः इतश्च शब्द उत्पद्यते नाभिव्यज्यते कृतकवदुपचारात् । तीव्रं मन्दमिति कृतकमुपचर्यते तीव्रं सुखं मन्दं सुखं तीव्रं दुःखं मन्दं दुःखमिति उपचर्यते च तीव्रः शब्दो मन्दः शब्द इति । –न्यायसू० भा० २।२।१३। 'अनित्यः शब्दः तीव्रमन्दविषयत्वात् दुःखवदिति कृतकवदुपचारादित्यनेन ग्रन्थेन सर्वानित्यत्वसाधनवर्गसंग्रहः कृतकवद्ग्रहणस्य उदाहरणार्थत्वात् । यथा सामान्यविशेषवत्त्वेऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् उपलभ्यस्य अनुपलब्धिकारणाभावे सत्यनुपलब्धेः गुणस्य सतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् इत्येवमादि । –न्यायवा० पृ० २९० । तदेवं तीव्रादिमदभिन्नत्वात्सुखादिवदनित्यत्वं शब्दानाम् । व्यञ्जकानुविधायी चाभूत्वा भवनस्योपलब्धेः कार्यत्वादनित्यत्वं घटादिवत् । तथा परमात्मगुणान्यत्वे सति व्यापकविशेषगुणत्वात् सुखादिवत् ।'–प्रश० व्यो० पृ० ६४९ । 'अतो यत्नजनितवर्णात्मा श्रवणमध्यस्वभावः प्राक् पश्चादपि पुद्गलानां नास्तीति तावानेव ध्वनिपरिणामः ।'–अष्टश०, अष्टसह० पृ० १०८ । परिणामी शब्दः वस्तुत्वान्यथानुपपत्तेः । –तत्त्वार्थश्लो० पृ० ६ । 'अनित्यः शब्दः तीव्रमन्दादिधर्मोपेतत्वात् सुखदुःखादिवत्' –रत्नाकराव० ४।९। 'तस्माद्वर्णो न नित्यो नित्यो वा सत्त्वे सत्युत्पत्तिमत्त्वात् अस्मदादिबहिरिन्द्रियग्राह्यत्वे सति जातिमत्त्वात् अस्मदादिप्रत्यक्षगुणत्वात् आत्मवृत्त्यप्रत्यक्षत्वपक्षे प्रयत्नविशेषगुणत्वात् व्यापकसमवेतप्रत्यक्षविशेषगुणत्वात्, अनात्मप्रत्यक्षगुणत्वात् अव्याप्यवृत्तित्वात् बहिरिन्द्रियव्यवस्थाहेतुगुणत्वात् भूतप्रत्यक्षगुणत्वात् उत्कर्षापकर्षशब्दप्रवृत्तिनिमित्तजातिमत्त्वाच्चेत्यादि । –तत्त्वचि० शब्द० पृ० ४६० ।

(१) घटस्य । (२) ताल्वादिव्यापारे । (३) वर्णात्मकवाक्यपदानाम् । तुलना– यथा च वर्णा एव न नित्यास्तथा कथं तथा पुरुषविवक्षाधीनानुपूर्व्यादिविशिष्टवर्णसमूहरूपाणां पदानां कृतकत्वाच्च तत्समूहरूपस्य वाक्यस्य कृतकत्वाच्च तत्समूहस्य वेदस्येति –तत्त्वचि० शब्द० पृ०४६४। (४) पदवाक्यानाम् । (५) पौरुषेयत्वसिद्धिः । (६) तयोः लौकिकवैदिकपदवाक्ययोः । (७) उद्धृतमिदम्–सन्मति० टी० पृ० ३० । तन्त्रवा० पृ० १३४ । भाट्टचि० पृ० ४१ ।

---

1 तथा शब्द- श्र० ।

तच्छास्त्रकर्त्तारमनुस्मरन्ति यथा अष्टकाद्यर्थानुष्ठानार्थिनः प्रणेतारं मनुम्, वेदविहितार्थानुष्ठाने बहुवित्तव्ययायाससाध्याऽग्निष्टोमादिकर्मारम्भणे प्रवर्त्तन्ते च प्रेक्षापूर्वकारिणः, अतस्तेषां महती तत्कर्तृस्मरणापेक्षा। ते हि अदृष्टफलेषु कर्मसु एवं निःशङ्का प्रवर्त्तेरन् यदि तेषां तद्विषयः सत्यतानिश्चयः स्यात्। न चासौ तदुपदेष्टुः स्मरणाभावे घटते पित्राद्युपदेशवत्। यथैव हि पित्रादिकमुपदेष्टारं स्मृत्वा स्वयमदृष्टफलेष्वपि कर्मसु तदुपदेशात् 'पित्रादिभिरेतदुपदिष्टं तेनाऽनुष्ठीयते' इति, एवं वैदिकेष्वपि कर्मसु अनुष्ठीयमानेषु कर्त्तुः स्मरणं स्यात्। न चाभियुक्तानामपि वेदार्थानुष्ठातृणां त्रैवर्णिकानां तत्स्मरणमस्ति, अतोऽसौ तत्र नास्तीति निश्चीयते।

छिन्नमूलत्वाच्च तत्र कर्तृस्मरणाभावः। स्मरणस्य हि अनुभवो मूलम्, न चासौ वेदे कर्तृविषयत्वेन विद्यते तत्कथं तत्स्मरणसम्भावनाशङ्काऽपि ? न च रचनावत्त्वेन अत्र भारतादिवत् कर्तृसद्भावप्रसिद्धेर्नास्य छिन्नमूलत्वमित्यभिधातव्यम्, वेदरचनायाः कर्तृपूर्वकरचनाविलक्षणत्वात्। न च रचनामात्रस्यात्रोपलम्भात् कर्त्रनुमानं युक्तम्, जगतो बुद्धिमद्धेतुकत्वानुमानानुषङ्गतोऽनिष्टसिद्धिप्रसङ्गात्। अतो यादृशी रचना कर्त्रन्वयव्यतिरेकानुविधायिनी प्रतिपन्ना तादृश्येव परिदृश्यमाना कर्त्तारमनुमापयति इत्यभ्युपगन्तव्यम्। तत्कथं वेदे तेन कर्त्रनुमानशङ्काऽपि सम्भाव्यते ? अतो वैदिकी रचना अपौरुषेयी दृष्टकर्तृकरचनाविलक्षणत्वात् आकाशवदिति। तथा–

"वेदाध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनवाच्यत्वादधुनाऽध्ययनं यथा॥" [ मी० श्लो० वाक्याधि० श्लो० ३६६ ]

(१) कर्त्तारं। आग्रहायण्या ऊर्ध्वं कृष्णाष्टमीषु क्रियमाणाः श्राद्धविशेषाः। तथा च मनुवचनम्– 'पितृदैवताष्टकास्वपि'–मनुस्मृति० ४।१५०। (२) अनुभव। (३) 'विप्लवते खल्वपि कश्चित्पुरुषकृताद्वचनात्प्रत्ययः न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति। ननु सामान्यतो दृष्टं पौरुषं वचनं वितथमुपलभ्य वचनसामान्यादिदमपि वितथमवगम्यते न प्रत्ययात्। न ह्यन्यस्य वितथभावे अन्यस्य वैतथ्यं भवितुमर्हति अन्यत्वादेव। न हि देवदत्तस्य श्यामत्वे यज्ञदत्तस्यापि श्यामत्वं भवितुमर्हति।'–शाबरभा० १।१।२। 'वाक्यत्वात् पौरुषेयत्वं दृष्टान्तेनावधितम्। प्रतिहेतुविरुद्धश्च हेतुः स्यादस्मदादिषु कृत्रिमा॥'–शास्त्रदी० पृ० ६१५। प्रकृष्टं हि वचनं कस्यचिदेव कृत्रचिदेव तावत्सङ्घातमत्स्थं न पौरुषेयतामनुमापयितुमलम् वेदार्थविषयवाक्यरचनासामर्थ्यानुपपत्तेः। एवं हि पदसङ्घातानां पौरुषेयं विरचयितुं शक्यन्ते तत्र पौरुषेयत्वं दृष्टमित्यशक्यविरचनेषु पौरुषेयत्वानुमानं न क्रमते। न च पौरुषेयत्वं विना पदसङ्घातात्मकत्वं नोपपद्यते उच्चारणवशान् हि पदानि संहततामापद्यन्ते। –प्रक० प० पृ० ९८–९९। तन्त्ररह० पृ० ४३। (४) रचनामात्रात्। (५) उक्तं तु शब्दपूर्वत्वम्। उक्तमस्माभिः शब्दपूर्वत्वमध्येतृणाम्।"–जैमिनिसू० शाबरभा० १।१।३०। 'कर्त्रस्य कर्तुरस्मरणम् वेदार्थस्यातीन्द्रियत्वमित्येवमादिहेतुभिरध्येतृणामनादिप्रवृत्तानां शब्दपूर्वं उच्चारणात्तत्पूर्वो वेदो न केनचित्कृत्वा अध्यापितः प्रवर्तित इति अकृतकत्वहेतोरुक्तत्वात्'–मीमांसाभा० प० प० ७८। अप्रतिसाधनञ्च वाक्यत्वात् इति। विवादाध्यासितं वेदाध्ययनं गुर्वध्ययनपूर्वकं वेदाध्ययनत्वादधुनातनाध्ययनवदिति। तदिदमाह सूत्रकारः– उक्तं तु शब्दपूर्व

1 तत्कर्त्तृस्मरणा–ब०। 2–त्तरकत्रनु–श्र०।

"अतीतानागतौ कालौ वेदकारविवर्जितौ ।
कालत्वात्तद्यथा कालो वर्तमान समीक्ष (क्ष्य) ते ॥" [ ]

इत्यतोप्यस्य अपौरुषेयत्वसिद्धि । †नन्वाप्तप्रणीतत्वाभावे कथमस्य प्रामाण्य स्यादिति चेत् ? 'अपौरुषेयत्वादेव' इति ब्रूम । वचनस्य पुरुषदोषानुप्रवेशेनैव अप्रामाण्यप्रसिद्धे †। तदुक्तम्–

"शब्दे दोषोद्भवस्तावद् वक्त्रधीन इति स्थितम् । तदभाव क्वचित्तावद् गुणवद्वक्तृकत्वत ॥
तद्गुणैरपकृष्टाना शब्दे सक्रान्त्यसभवात् । यद्वा वक्तुरभावेन न स्युर्दोषा निराश्रया ॥"
[ मी० श्लो० चोदना० श्लो० ६२, ६३ ]

न च आप्तगुणसक्रान्त्यैव शब्दस्य प्रामाण्यम्, वेदे च आप्तप्रणीतत्वाभावत तत्सक्रान्त्यसभवान्न प्रामाण्यमित्यभिधातव्यम्, यतो नात्र आप्तगुणसक्रान्त्या प्रामाण्यम् शब्दोच्चारणमात्रे तस्य व्यापारात्, शब्दस्तु स्वमहिम्नैव अवितथार्थप्रतिपत्ति कुर्वाण प्रमाणम् । न चैवमनाप्तस्यापि तदुच्चारणमात्रे व्यापारात् शब्द स्वमहिम्नैवासत्यप्रतीतिं कुर्वाण अप्रमाणमित्यभिधातव्यम्, अनाप्तप्रणीतत्वादिदोषाणाम् अप्रामाण्योत्पादनादन्यप्रयोजनाभावात्, आप्तप्रणीतत्वादिगुणाना तु दोषापसारणे व्यापारात् स्वत प्रामाण्य

त्वम्' इति । शब्दशब्देनात्र शब्दजन्यमध्ययनम् । तदयमर्थ –सर्वपुसामध्ययनमध्ययनान्तरपूर्वकम् सर्वे हि यथा गुरुणाऽधीत तथैवाधिजिगासन्ते न पुन स्वातन्त्र्येण कश्चिदपि प्रथमोऽध्येता वेदानामस्ति य कर्ता स्यात् तस्मादपौरुषेया वेदा ।'–शास्त्रदी० पृ० ६१७ । "विमत वेदाध्ययन परत नाध्येतृक वेदाध्ययनत्वात् सम्प्रतिपन्नाध्ययनवत्, आत्मत्व वेदकर्तृव्यक्तिसमवेत न भवति जातित्वात् गोत्ववदिति प्रतिहेतुविरुद्धञ्च वाक्यत्वम ।"–मानमेयो० पृ० १७३ । उद्धृतोऽयम्–प्रमाणवा० स्ववृ० टी० पृ० ३३८ । न्यायम० पृ० २३३ । 'तदध्ययनपूर्वकम'–अष्टसह० पृ० २३७ । तत्त्वस० पृ० ६४३ । प्रमेयक० पृ० ३९६ । सन्मति० टी० पृ० १३७ । स्या० र० पृ० ६२७ । विश्वतत्त्वप्र० पृ० ३३ । 'तदध्ययनपूर्वकम्'–प्रमेयर० ३।९९ । रत्नाकराव० ४।९ ।

(१) ' वेदकारवियोगिनौ । कालत्वात्तद्यथा'–प्रमाणवा० स्ववृ० टी० पृ० ३३८ । तत्त्वस० पृ० ६४३ । 'वेदकारविवर्जितौ –प्रमेयक० पृ० ३९८ । सन्मति० टी० पृ० ३१ । स्या० र० पृ० ६२७ । विश्वतत्त्वप्र० पृ० ३४ । प्रमेयर० ३।९९ । रत्नाकराव० ४।९ । (२) वेदस्य । (३) 'विप्लवते हि खल्वपि कश्चित्पुरुषकृताद्वचनात् प्रत्यय, न तु वेदवचनस्य मिथ्यात्वे किञ्चन प्रमाणमस्ति ।"–शाबरभा० पृ० १७ । (४) 'इति स्थिति'–मी० श्लो० । स्या० र० पृ० ६२७ । रत्नाकराव० ४।९ । प्रस्तुतपाठ–न्यायम० पृ० १६७ । प्रमाणप० पृ० ७८ । सिद्धिवि० टी० पृ० ४०६A । प्रमेयक० पृ० ३९७ । सन्मति० टी० पृ० १९ । प्रमेयर० ३।९९ । (५) शाब्द प्रत्यये । (६) आप्तस्य । (७) "तस्माद् गुणेभ्यो दोषाणामभावस्तदभावत । अप्रामाण्यद्वयासत्त्वं तेनोत्सर्गोऽनपोदित ॥ तत्रापवादनिर्मुक्तिर्वक्त्रभावाल्लघीयसी । वेदे तेनाप्रमाणत्व नाशङ्कामपि गच्छति । अतो वक्त्रधीनत्वात्प्रामाण्ये तदुपासनम् । न युक्तम्, अप्रमाणत्वे कल्प्ये तत्प्रार्थना भवेत् । ततश्चाप्ताऽप्रणीतत्वं न दोषायात्र जायते ।'–मी० श्लो० चोदना० श्लो० ६५ ७० ।

1–त्या यथा आ०, श्र० । 2–स्वमिति न श्रा–ब० । †एतदन्तर्गत पाठो नास्ति आ० । 3 न चाप्तप्रणीतत्वाभावे–ब० । 4 शब्दो आ० । 5–वतुरभावत श्र० । 6 शब्दस्तत्रा–श्र० । 7 नाप्तगुण–ब० ।

वेदे आप्तानामप्रणीतत्वाभावात् प्रामाण्यमप्रामाण्यं वा, इत्यप्यसुन्दरम्, यत्र हि पुरुषकृता पदानुपूर्वी तत्र तदपेक्षं प्रामाण्यमप्रामाण्यं वा स्यात्, वेदानुपूर्व्यास्तु नित्यत्वात् स्वभावेनैवार्थावबोधकत्वात् तन्निरपेक्षं प्रामाण्यम्। नहि तादृशीमानुपूर्वीं कश्चित् कर्त्तुं क्षमः अन्यत्राऽभिव्यक्तेः। पूर्वसिद्धानुऽपूर्वीतोऽपूर्वानुपूर्वीकरणे च कस्यचित् व्यात्यासंभवात्। छ्वर्णो वा तां तदध्येतॄभिः अन्यैर्वा निवार्येत। उक्तञ्च–

''यन्नयत्नाकरणं चास्य बहुभ्यः स्याविनारैता।'' [मी० श्लो० चोदनासू० श्लो० १५०] इति।

अत्र प्रतिविधीयते। यत्तावदुक्तम्–'कर्त्तुः स्मरणयोग्यत्वे सति अस्मर्यमाणकर्तृकत्वात्'

वेदापौरुषेयत्वस्य प्रतिविधानम्–

इत्यादि, तदसमीचीनम्, यतः किमिदम् अस्मर्यमाणकर्तृकत्वनाम– किं कर्तृस्मरणाभावः, अकर्तृकत्वं वा? प्रथमपक्षे व्यधिकरणासिद्धो हेतुः, कर्तृस्मरणाभावो हि आत्मनि वर्त्तते अपौरुषेयत्वं तु वेदे इति। अज्ञानासिद्धश्च, तद्ग्राहकप्रमाणाभावात्। नहि प्रत्यक्षं तद्ग्राहकम्, प्रतिनियतरूपादिगोचरचारितया अभावे तस्य प्रवृत्त्यसंभवात्। संभवे वा अभावप्रमाणकल्पनाऽनर्थक्यम् तत्साध्यस्य अध्यक्षादित एव प्रसिद्धेः। अभावप्रमाणात्तत्सिद्धौ तु तत्र तदुत्पत्तौ कारणं वाच्यम्, निष्कारणस्य कार्यस्योदयानुपपत्तेः।

''गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया॥'' [मी० श्लो० अभाव० श्लो० २७]

इति तत्कारणमस्तीति चेत्, ननु अतः प्रादुर्भूतमभावप्रमाणं तदभावं निराश्रयम्, साश्रयं वा प्रसाधयेत्? न तावन्निराश्रयम्, 'गृहीत्वा वस्तुसद्भावम्' इत्यभिधानात्। अनेन हि निषेध्याधारवस्तुग्रहणमभिदधता भट्टेन निषेध्याभावाश्रयः सूचित एव, अन्यथा प्रतिनियतवृत्तितया कर्तृस्मरणाभावसिद्धिः ततोऽतिदुर्लभा। यन्निराश्रयं न तत् प्रतिनियतवृत्ति यथा आकाशम्, निराश्रयश्च भवद्भिरभिप्रेतोऽभावप्रमाणात्प्रसिद्ध्यन् कर्तृस्मरणाभाव इति।

(१) पौरुषेयं तु वचनं प्रमाणान्तरमूलता। तदभावे हि तत् दुष्यदिति स्यन्न कदाचन॥ –मी० श्लो० चोदना० श्लो० ७१। (२) पुरुषगुणनिरपेक्षम्। (३) पूर्वानुपूर्वीतो विलक्षणा आनुपूर्वी। (४) विलक्षणां शब्दानुपूर्वीम्। (५) निवारणम् –मी० श्लो०। प्रकृतपाठ –स्या० र० पृ० ६२८। (६) पृ०७२१पं०५। (७) तुलना– किमिदं कर्तृस्मरणं नाम कर्तृस्मरणाभावः अस्मर्यमाणकर्तृकत्वं वा? –प्रमेयक० पृ० ३९२। (८) अपौरुषेयो वेदः कर्तृस्मरणात् इत्यत्र प्रयोगः इतोऽव्यधिकरणत्वदोषात्।' –सन्मति० टी० पृ० ४१। (९) तत्रास्मर्यमाणकर्तृकत्वमसिद्धम् तद्ग्राहकप्रमाणाभावात्।'– स्या० र० पृ० ६२९। (१०) अभावप्रमाणेन क्रियमाणस्य अभावज्ञानस्य। (११) कर्तृस्मरणाभावसिद्धौ। (१२) अभावप्रमाणोत्पत्तौ। (१३) द्रष्टव्यम्–पृ०४६४टि०१। (१४) कर्तृस्मरणाभावम्। 'नन्वतः प्रादुर्भूतमभावप्रमाणं तदभावं साश्रयमेव प्रसाधयेत् गृहीत्वा वस्तुसद्भावमित्यभिधानात्।''– स्या० र० पृ० ६२९। (१५) गृहीत्वा वस्तुसद्भावमिति श्लोकांशेन। (१६) निषेध्यस्य यः अभावः तस्य आश्रयः। (१७) अभावप्रमाणात्।

1–नैवावबोध–ब०। 2–त्वान्निरपे–ब०। 3–व्यापि व्यज्यते आ०। 4 पूर्वं सि–ब०। 5 ऽसम्भवा–आ०। 6 बहुभि ब०। 7 नि क्वा–आ०। 8 निषेध्याश्रय ब०।

अथ साश्रयोऽसौ प्रसाध्यते, ननु कोऽस्य आश्रय –स्वात्मा, सर्वप्रमातारो वा ? यदि स्वात्मा 'अमुष्मिन्मदीय आत्मनि वेदकर्तृस्मरणं नास्ति' इति, किमेतावता सिद्धम् ? पदार्थजातस्य अनेकस्य अत्र स्मरणं नास्ति, न चैतावता तस्याभावः सिद्ध्यति । ममानुष्ठातुरवश्यं स्मर्तव्योऽसौ, यदा स्मृतिपथप्रस्थायी न भवति तदाऽसन्, इत्यप्यसारम्, भवत्स्मरणाभावमात्रेण अर्थाभावाऽसिद्धेः । वस्त्रे स्वयं निहितेऽवश्यं स्मर्तव्ये कचिद् द्रव्यान्तरे विद्यमानेऽपि सद्भावेन अनेकान्तात् । तथा व्याधितेन उपयुज्यमानमौषधं स्वयं धृतं महत्यामप्यर्थितायां न स्मर्यते, न चैतावता तस्याऽभावः इत्यनेन चाऽनेकान्तः । अथ सर्वप्रमातारः, ननु 'त्रैलोक्योदरवर्तिनः प्रमातारो वेदकर्तारं न स्मरन्ति' इत्यसर्वविदो वेदनानुपपत्तिः । उपपत्तौ वा सर्ववेदित्वप्रसङ्गः ।

किञ्च, सर्वप्रमातृदेशान् गत्वा तांश्च पृष्ट्वा तत्र स्मरणाभावः प्रतीयेत, अन्यथा वा ? न तावदन्यथा, "गत्वा गत्वा तु तान् देशान्" [मी० श्लो० अर्था० श्लो० ३८] इत्यस्य विरोधानुषङ्गात् । गत्वा चेत्, ननु तत्र तेषु पृष्टेषु 'न स्मराम' इति प्रतिवचनञ्च ब्रुवाणेष्वपि कः समाश्वासः पुरुषवचसामप्रामाण्येन अर्थतथाभावानुपपत्तेः ? न च सर्वेषामाप्तताप्रतिपत्तिरस्ति, यतः तद्गुणसङ्क्रान्त्या तत्र प्रामाण्यं स्यात्, तत्प्रतिपत्तेरेव असर्वविदो युगपत्क्रमेण चाऽसंभवात् ।

किञ्च, अभावप्रमाणस्य तत्र प्रवृत्तिः यत्र वस्तुसत्तावबोधार्थं प्रमाणपञ्चकं न प्रवर्तते ।

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥" [मी० श्लो० अभाव० श्लो० १]

(१) भवत्स्मरणाभावस्य । 'अपि च किमशेषजनस्मरणनिवृत्तिरिह हेतुत्वेन विवक्षिता, आहोस्वित् कतिपयपुरुषस्मरणविनिवृत्तिः । तद्यदि सकलजनस्मरणविनिवृत्तिः, तदाऽसिद्धा, अवधारयितुमशक्यत्वादर्वाग्भागविद्भिः । अवधारणे वा त एव सर्वज्ञाः स्युः अर्वाग्भागविदो न भवेयुः । अथ कतिपयपुरुषापेक्षया, तदाऽनैकान्तिको हेतुः, विद्यमानकर्तृकेष्वपि कर्ता न स्मर्यते कश्चित् ।"–तत्त्वोप० पृ० ११७ । 'आश्रयश्चास्य स्वात्मा सर्वप्रमातारो वा –स्या० र० पृ० ६२९ । (२) मदीय आत्मनि । (३) "ममानुष्ठाने स्मर्तव्योऽसौ'–स्या० र० पृ० ६२९ । (४) वेदकर्ता । (५) "एवं तर्हि पितामहस्य पितरं मातामहीमातरम्, तन्मातापितरौ च न स्मरति तत्तेषामभावो भवेत् ।'–स्या० र० पृ० ६२९ । (६) भवत्स्मरणाभावस्य (७) स्वयं धृतौषधादिद्रव्यस्य । (८) ननु इति निश्चयार्थे । तुलना– 'सर्वे पुमांसः कर्तारं वेदस्य न स्मरन्ति इति कथं जानाति भवान् । न हि तव सकललोकहृदयानि प्रत्यक्षाणि सर्वज्ञत्वप्रसङ्गात् । न च यत् त्वं न जानासि तदन्योऽपि न जानातीति युक्तमतिप्रसङ्गात् ।' –न्यायम० पृ० २३७ । स्या० र० पृ० ६३० । (९) तुलना–"अपि च सर्वप्रमातृस्थानान् गत्वा तांश्च पृष्ट्वा तत्र कर्तृस्मरणाभावः प्रतीयते अन्यथा वा ?'–स्या०र०पृ०६३० । (१०) सर्वप्रमातॄन् । (११)"गत्वा गत्वा तु तान्देशान् यद्यर्थो नोपलभ्यते । ततोऽन्यकारणाभावादसन्नित्यवगम्यते ॥"–मी० श्लो० । उद्धृतोऽयम्–प्रमेयक० पृ० २२ । सन्मति० टी० पृ० २३,३२१ । (१२) देशान्तरे । (१३) सर्वप्रमातृषु । (१४) तत्कर्तृ 'न स्मराम' इति प्रतिवचने । (१५) द्रष्टव्यम्–पृ० ४६४ टि० ४ ।

1 यानेन–आ० । 2 सर्वत्रप्रमा–ब० । 3 तत्र स्मरं न स्मरन्तीत्यसर्वविदो वेदनान् गत्वा गत्वा–आ० । 4 प्रतीयते ब० । 5 सद्भाव–ब० ।

वेदे आप्तानाप्तप्रणीतत्वाभावात्र प्रामाण्यमप्रामाण्यं वा, इत्यप्यसुन्दरम्, यत्र हि पुरुषकृता पदानुपूर्वी तत्र तदपेक्षं प्रामाण्यमप्रामाण्यं वा स्यात्, वेदानुपूर्व्यास्तु नित्यत्वात् स्वसामर्थ्यैनैवार्थावबोधकत्वात् तन्निरपेक्षं प्रामाण्यम्। नहि तादृशीमानुपूर्वीं कश्चित् कर्तुं क्षमः अन्यत्राऽभिव्यक्ते। पूर्वसिद्धानुपूर्वीतोऽपूर्वानुपूर्वीकरणे च कस्यचित् स्यात् न्यासभयात्। क्षुराणो वा तां तदध्येतृभिः अन्यैर्वा निवार्येत। उक्तञ्च–

"अन्यथाकरणे चास्य बहुभ्यः स्यान्निवारणा।" [मी० श्लो० चोदनासू० श्लो० १५०] इति।

वेदापौरुषेयत्वस्य प्रतिविधानम्–

अत्र प्रतिविधीयते। यत्तावदुक्तम्–'कर्तुः स्मरणयोग्यत्वे सति अस्मर्यमाणकर्तृकत्वात्' इत्यादि, तदसमीचीनम्, यतः किमिदम् अस्मर्यमाणकर्तृकत्वं नाम–किं कर्तृस्मरणाभावः, अकर्तृकत्वं वा? प्रथमपक्षे व्यधिकरणासिद्धो हेतुः, कर्तृस्मरणाभावो हि आत्मनि वर्तते अपौरुषेयत्वं तु वेदे इति। अज्ञानासिद्धश्च, तद्ग्राहकप्रमाणाभावात्। नहि प्रत्यक्षं तद्ग्राहकम्, प्रतिनियतरूपादिगोचरचारितया अभावे तस्य प्रवृत्त्यसंभवात्। संभवे वा अभावप्रमाणकल्पनाऽनर्थक्यम् तत्साध्यस्य अन्यथाश्रित एव प्रसिद्धेः। अभावप्रमाणात्तत्सिद्धौ तु तत्र तदुत्पत्तौ कारणं वाच्यम्, निष्कारणस्य कार्यस्योदयानुपपत्तेः।

"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया॥" [मी० श्लो० अभाव० श्लो० २७]

इति तत्कारणमस्तीति चेत्; ननु अतः प्रादुर्भूतमभावप्रमाणं तदभावं निराश्रयम्, साश्रयं वा प्रसाधयेत्? न तावन्निराश्रयम्, 'गृहीत्वा वस्तुसद्भावम्' इत्यभिधानात्। अनेन हि निषेध्याधारवस्तुग्रहणमभिदधता भट्टेन निषेध्याभावाश्रयः सूचित एव, अन्यथा प्रतिनियतवृत्तितया कर्तृस्मरणाभावसिद्धिः ततोऽतिदुर्लभा। यन्निराश्रयं न तत् प्रतिनियतवृत्ति यथा आकाशम्, निराश्रयश्च भवद्भिरभिप्रेतोऽभावप्रमाणात्प्रसिद्ध्यन् कर्तृस्मरणाभाव इति।

(१) 'पौरुषेयं तु वचनं प्रमाणान्तरमूलता। तदभावे हि तन्न दुष्येदितरत्र कदाचन॥' –मी० श्लो० चोदना० श्लो० ७१। (२) पुरुषगुणनिरपेक्षम्। (३) पूर्वानुपूर्वीतो विलक्षणा आनुपूर्वी। (४) विलक्षणां शब्दानुपूर्वीम्। (५) निवारणम् –मी० श्लो०। प्रकृतपाठः–स्या० र० पृ० ६२८। (६) पृ०७२१प०५। (७) तुलना– 'किमिदं कर्तुरस्मरणं नाम कर्तृस्मरणाभावः अस्मर्यमाणकर्तृकत्वं वा?' –प्रमेयक० पृ० ३९२। (८) अपौरुषेयो वेदः कर्त्रस्मरणात् इत्यत्र प्रयोगे हेतोर्व्यधिकरणत्वदोषात्।' –सन्मति० टी० प० ४१। (९) तत्रास्मर्यमाणकर्तृकत्वमसिद्धम् तद्ग्राहकप्रमाणाभावात्।'– स्या० र० पृ० ६२९। (१०) अभावप्रमाणेन क्रियमाणस्य अभावज्ञानस्य। (११) कर्तृस्मरणाभावसिद्धौ। (१२) अभावप्रमाणोत्पत्तौ। (१३) द्रष्टव्यम्–पृ०४६४टि०१। (१४) कर्तृस्मरणाभावम्। 'नन्वतः प्रादुर्भूतमभावप्रमाणं तदभावं साश्रयमेव प्रसाधयेत् गृहीत्वा वस्तुसद्भावमित्यभिधानात्।'– स्या० र० पृ० ६२९। (१५) गृहीत्वा वस्तुसद्भावमिति श्लोकांशेन। (१६) निषेध्यस्य यः अभावः तस्य आश्रयः। (१७) अभावप्रमाणात्।

1–नभावबोध–ब०। 2–स्वान्निरपे–ब०। 3–त्रापि व्यक्ते आ०। 4 पूर्व सि–ब०। 5 अन्य निवा–आ०। 6 बहुभि ब०। 7 ति का–आ०। 8 निषेध्याश्रय ब०।

अथ साश्रयोऽसौ प्रसाध्यते, ननु कोऽस्य आश्रयः—स्वात्मा, सर्वप्रमातारो वा ? यदि स्वात्मा 'अमुष्मिन्मदीय आत्मनि वेदकर्तृस्मरणं नास्ति' इति, किमेतावता सिद्धम् ? पदार्थजातस्य अनेकस्य अत्र स्मरणं नास्ति, न चैतावता तस्याभावः सिद्ध्यति। ममानुष्ठातुरवश्यं स्मर्त्तव्योऽसौ, यदा स्मृतिपथप्रस्थायी न भवति तदाऽसन्, इत्यप्यसारम्, मयत्स्मरणाभावमात्रेण अर्थाभावाऽसिद्धेः। तस्य स्वयं निहितेऽनष्टस्य स्मर्त्तव्ये क्वचिद् द्रव्यादौ विद्यमानेऽपि सद्भावेन अनेकान्तात्। तथा व्याधितेन उपयुज्यमानमौषधं स्वयं धृतं महत्यामप्यर्थितायां न स्मर्यते, न चैतावता तस्याऽभावः इत्यनेन चाऽनेकान्तः। अथ सर्वप्रमातारः, ननु 'त्रैलोक्योदरवर्त्तिनः प्रमातारो वेदकर्त्तारं न स्मरन्ति' इत्यसर्वविदो वेदनानुपपत्तिः। उपपत्तौ वा सर्ववेदित्वप्रसङ्गः।

किञ्च, सर्वप्रमातृदेशान् गत्वा तांश्च पृष्ट्वा तत्र स्मरणाभावः प्रतीयेत, अन्यथा वा ? न तावदन्यथा, "गत्वा गत्वा तु तान् देशान्" [मी० श्लो० अर्था० श्लो० ३८] इत्यस्य विरोधानुषङ्गात्। गत्वा चेत्, ननु तत्र तेषु पृष्टेषु 'न स्मरामः' इति प्रतिवचनञ्च ब्रुवाणेष्वपि कः समाश्वासः पुरुषवचसामप्रामाण्येन अर्थतथाभावानुपपत्तेः ? न च सर्वेषामाप्तताप्रतिपत्तिरस्ति, यतः तद्गुणसमाख्या सर्वत्र प्रामाण्यं स्यात्, तत्प्रतिपत्तेरेव असर्वविदो युगपत्क्रमेण वाऽसंभवात्।

किञ्च, अभावप्रमाणस्य तत्र प्रवृत्तिः यत्र वस्तुसत्तावबोधकं प्रमाणपञ्चकं न प्रवर्त्तते।

"प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ॥" [मी० श्लो० अभाव० श्लो० १]

---

(१) कर्तृस्मरणाभावस्य। "अपि च किमशेषजनस्मरणनिवृत्तिरिह हेतुत्वेन विवक्षिता आहोस्वित् कतिपयपुरुषस्मरणविनिवृत्तिः। तद्यदि सकलजनस्मरणविनिवृत्तिः, तदाऽसिद्धा, अवधारयितुमशक्यत्वादर्वाग्भागविद्भिः। अवधारणे वा त एव सर्वज्ञाः स्युः अर्वाग्भागविदो न भवेयुः। अथ कतिपयपुरुषापेक्षया, तदाऽनैकान्तिको हेतुः, विद्यमानकर्तृकस्यापि कर्ता न स्मर्यते कश्चित्।"–तत्त्वसं० पं० पृ० ११७। "आश्रयश्चास्य स्वात्मा सर्वप्रमातारो वा"–स्या० र० पृ० ६२९। (२) मदीय आत्मनि। (३) "ममानुष्ठाने स्मर्तव्योऽसौ"–स्या० र० पृ० ६२९। (४) वेदकर्ता। (५) "एवं तर्हि पितामहस्य पितरं मातामहीमातरं, तन्मातापितरौ च न स्मरति ततस्तेषामभावो भवेत्।"–स्या० र० पृ० ६२९। (६) मयत्स्मरणाभावस्य (७) स्वयं धृतौषधादिद्रव्यस्य। (८) ननु इति निश्चयार्थे। तुलना–'सर्वे पुमांसः कर्तारं वेदस्य न स्मरन्ति इति कथं जानाति भवान्। न हि तव सकललोकहृदयानि प्रत्यक्षाणि सर्वज्ञत्वप्रसङ्गात्। न च मत् त्वं न जानासि तदन्योऽपि न जानातीति युक्तमतिप्रसङ्गात्।"–प्रमाणम० पृ० २३७। स्या० र० पृ० ६३०। (९) तुलना–"अपि च सर्वप्रमातृदेशान् गत्वा तांश्च पृष्ट्वा तत्र कर्तृस्मरणाभावः प्रतीयेतान्यथा वा ?"–स्या०र०पृ०६३०। (१०) सर्वप्रमातॄन्। (११) 'गत्वा गत्वा तु तान् देशान् यद्यर्थो नोपलभ्यते। ततोऽन्यकारणाभावादसन्नित्यवगम्यते॥'–मी० श्लो०। उद्धृतोऽयम्–प्रमेयक० पृ० २२। सन्मति० टी० पृ० २२,२२१। (१२) देशान्तरे। (१३) सर्वप्रमातृषु। (१४) ब्रुवाणे 'न स्मरामः' इति प्रतिवचनम्। (१५) द्रष्टव्यम्–पृ० ४६४ टि० ४।

1 चाने–आ०। 2 सर्वप्रमा–ब०। 3 तत्र स्मर न स्मरतीत्यसर्वविदो वेदनानु गत्वा गत्वा आ०। 4 प्रतीयते ब०। 5 सद्भाव–ब०।

इत्यभिधानात् । वेदे च आत्मन कर्तृसद्भावावेदके सति कथ तत्प्रवृत्ति ?

"स हि रुद्र वदकर्तारम् ।" [ ]

"यो ब्रह्माणं विदधाति पूर्वं वेदांश्च प्रहिणोति ।" [श्वेता०उ० ६।१८]

"तथा प्रजापति सोम राजानमन्वसृजत, तत त्रयो वेदा अन्वसृज्यन्त ।" [ ]

इत्यादिको वेद कर्तृसद्भावावेदक अनेकधा श्रूयते । स्वरूपासिद्धश्चाय हेतु, पौराणिका हि वेदस्य ब्रह्मकर्तृत्व स्मरन्ति–

"प्रतिमन्वन्तरञ्चैव श्रुतिरन्या विधीयते ।" [मत्स्यपु० १४५।५८]

"अनन्तर तु वक्त्रेभ्यो वेदास्तस्य विनि सृता ।" [ ]

इत्यभिधानात् । यौगा रुद्रैककर्तृत्वम्, जैना कालासुरैककर्तृकत्वम् ।

स्मृतिपुराणादिवच्च ऋषिनामाङ्किता काण्व-माध्यन्दिन-तैत्तिरीयादय शाखाभेदा कथमस्मर्यमाणकर्तृका ? तथाहि–एतां तत्कृतत्वात् तन्नामभिरङ्किता, तद्दृष्टत्वात्, तत्प्रकाशितत्वाद्वा ? तत्राद्यपक्षे कथमासामपौरुषेयत्वम् अस्मर्यमाणकर्तृकत्व वा स्यात् ? उत्तरपक्षद्वये यदि तावदुत्सन्ना शाखा कण्वादिना दृष्टा प्रकाशिता वा तदा कथमस्या सम्प्रदायाविच्छेद अतीन्द्रियार्थदर्शिन प्रतिक्षेपश्च स्यात् ? अथ अनवच्छिन्नैव सा

(१) स्वयमेव वदस्य । (२) अभावप्रमाणप्रवृत्ति । (३) उद्धृतोऽयम्–स्या० र० पृ० ६३ । रत्नाकराव० ४।९ । (४) अपौरुषेयतापीष्टा कर्तृणामस्मृते किल । सन्त्यस्याप्यनुवक्तार इति धिग् व्यापक तम ॥ यस्मादपि साधनमसिद्धमनैकान्तिकञ्च तत्रासिद्धमधिकृत्याह–तथाहीत्यादि । स्मरन्ति सौगता वेदस्य कर्तृनष्टकादीन् आदिविद्वन्द् वामकवामदेवविश्वामित्रप्रभृतीन् । हिरण्यगर्भ ब्रह्माणं वेदस्य कर्तारं स्मरन्ति काणादा वैशेषिका ततश्चासिद्ध कर्तुरस्मरणम् ।'–प्रमाणवा० स्ववृ० टी० १।२६९ । मनोरथ० ३।२६९ । असिद्धोऽप्ययं हेतु यस्मात्स्मरन्ति एव कर्तारं काणादा । तथा पौराणिका अपि बहुलं वक्तारो भवन्ति ब्रह्मणा वेदा प्रणीता इति । –तत्त्वोप० पृ० ११७ । 'न च सर्वज्ञता कस्य स्मृतेरप्रसिद्धित । तत्कारणं हि काणादा स्मरन्ति चतुराननम् । जैना कालासुरं बौद्धा स्वष्टकान् सकला सदा ॥'–तत्त्वार्थश्लो० पृ० २३८ । अष्टसह पृ० २३७ । प्रमेयक० पृ० ३९३ । सन्मति० टी० पृ० ४० । स्या० र० पृ० ६३० । यच्चेदमस्मर्यमाणकर्तृकत्वादिति तदसिद्धम् प्रजापतिर्वा इदमेक आसीन्नाहरासीन्न रात्रिरासीत् स तपोऽतप्यत तस्मात्तपसश्चत्वारो वेदा अजायन्त इत्याम्नायेनैव कर्तृस्मरणात्, जीर्णकूपादिभिर्व्यभिचाराच्च । –प्रश० कन्द० पृ० २१६ । 'कपिलकणादगौतमनन्दिप्रभृत्याचार्यपर्यन्तं वेदे सकर्तृकत्वस्मरणस्य प्रतीयमानत्वात् । –तत्त्वचि० शब्द० पृ० ३७१ । (५) उद्धृतोऽयम्–न्यायम० पृ० २३६। प्रमेयक० पृ०३९२। स्या० र० पृ० ६३० । न्यायपरि० पृ० ३८३। तत्त्वचि० शब्द० पृ० ३७३। (६) तुलना– सज्जमरणाधिगोत्रचरणादिनामश्रुतेरनेकपदसंहतिप्रतिनियमसन्दर्शनात् । फलार्थिपुरुषप्रवृत्तिविनिवृत्तिहेत्वात्मनाम्, श्रुतेश्च मनुसूत्रवत्पुरुषकर्तृकैव श्रुति ॥ –पात्रके० श्लो० १४। प्रमेयक०पृ०३९२ । स्या० र० पृ० ६३० । प्रमेयर० ३।९९ । (७) काण्वमाध्यन्दिनतैत्तिरीयादय शाखा । तुलना–"एतास्तत्कृतत्वात्तन्नामभिरङ्कितास्तदृष्टत्वात् तत्प्रकाशितत्वाद्वा ।"–प्रमेयक० पृ० ३९२। स्या० र० पृ० ६३० । रत्नाकराव० ४।९। (८) विशीर्णा विस्मृता वा । (९) शाखाया ।

1 कर्तृत्वम्–ब०, श्र० । 2–कर्तृत्वम ब० ष० । 3–मदुच्छिन्ना आ० ।

सम्प्रदायेन दृष्टा प्रकाशिता वा, तर्हि यावद्भिरुपाध्यायै मा दृष्टा प्रकाशिता वा तावता नामभि तस्या किन्नाङ्कितत्व स्यादविशेषात् ?

अथोच्यते–अस्ति यौगादीना वेदे कर्त्तृस्मरण किन्तु सविगान तत्कर्तृविशेषे विप्रतिपत्ते अतोऽप्रमाणमिति, तदप्युक्तिमात्रम्, यैत कर्तृविशेषे विप्रतिपत्ते तद्विशेषस्मरणमेवाप्रमाण स्यान्न कर्तृमात्रस्मरणम्, अन्यथा कादम्बर्यादीनामपि कर्तृविशेषे विप्रतिपत्तौ कर्त्तृमात्रस्मरणस्याप्रमाणत्वेन अस्मर्यमाणकर्त्तृकत्वस्य तत्रापि (तत्रापि) गतत्वादनेकान्त । अथ वेदे कर्त्तृविशेषे विप्रतिपत्तिवत् कर्त्तृमात्रेऽपि विप्रतिपत्ते तन्मात्रस्मरणमप्यप्रमाण कादम्बर्यादीना तु कर्त्तृविशेषे एव विप्रतिपत्ते तत्प्रमाणमित्यतो नानेकान्त, ननु वेदे सौगतादय कर्तार स्मरन्ति न मीमासका इत्येव कर्त्तृमात्रे विप्रतिपत्ते यदि तदप्रमाणम्, तर्हि तद्वत् तत्स्मरणमप्यप्रमाण किन्न स्यात् विप्रतिपत्तेरविशेषात् । तथा चायमसिद्धो हेतु ।

विरुद्धश्च, स्मर्यमाणकर्त्तृकत्वाऽस्मर्यमाणकर्त्तृकत्वयो कार्यधर्मतया विपक्ष एव वर्त्तमानत्वात् । कार्यमेव हि किञ्चित् स्मर्यमाणकर्त्तृक दृष्ट घटादि, किञ्चिदस्मर्यमाणकर्त्तृक जीर्णकूपादि । ततश्च कृतको वेद अस्मर्यमाणकर्त्तृकत्वात् जीर्णकूपादिवत् । नहि नित्य

(१) 'समाख्यापि च शाखाना नाद्यप्रवचनादृते । काठक कालापकमित्यादयो हि समाख्याविशेषा शाखाविशेषाणामनुस्मर्यन्ते । ते च न प्रवचनमात्रनिबन्धना प्रवक्तृणामनन्तत्वात् । नापि प्रकृष्टवचननिमित्ता, उपाध्यायेभ्योऽपि प्रकर्षे प्रत्युताऽयथाकरणदोषात्, तत्पाठानुकरणे च प्रकर्षाभावात् । कति चानादौ ससारे प्रकृष्टा प्रवक्तार इति को नियामक इति ।'–न्यायकुसु० ५।१७ । (२) 'येऽपि हि पौरुषेयता मन्यन्ते तेऽपि नैव परम्परया तत्र कर्तृविशेषस्मरण शक्नुवन्ति वदितुम्, सामान्यतोदृष्टेन कर्तारमनुमाय स्वाभिमत कर्तार तत्र निक्षिपन्ति–केचिदीश्वरम्, अन्ये हिरण्यगर्भम्, अपरे प्रजापतिम । न चाय नानाविधो विवाद परम्परया कर्तरि मन्वादिवत् स्मर्यमाणे कथञ्चिदवकल्पते । नहि मानवे भारते शाक्यग्रन्थे वा कर्तृविशेष प्रति कश्चिद्विवदते । तस्मात् स्मर्तव्यत्वे सत्यस्मरणात् दृढमादरानबाधिन सामान्यतोदृष्ट न शक्नोति कर्तारमवसाययितुम् ।–शास्त्रदी० पृ० ६१७ । (३) सविवादम । (४) दृष्टे–आ० टि० । (५) तुलना–'नन्वत्र कर्तृविशेषे विप्रतिपत्तेस्तद्विशेषस्मरणमेवाप्रमाण स्यात न कर्तृमात्रस्मरणम् ।–प्रमेयक० पृ० ३९३ । सन्मति० टी० पृ० ४२ । स्या० र० पृ० ६३० । शास्त्रवा० यशो० पृ० ३८४ A । (६) कादम्बर्यादावपि । (७) तुलना–'अथ वेदे कर्तृविशेषे विप्रतिपत्तिवत् कर्तृमात्रेऽपि विप्रतिपत्तेस्तत्स्मरणमप्यप्रमाणम '–प्रमेयक० पृ० ३९३ । सन्मति० टी० पृ० ४२ । स्या० र० पृ० ६३० । (८) कर्तृमात्रस्मरणम् । (९) तुलना–'ननु वेदे सौगताद्य कर्तृमात्र स्मरन्ति न मीमासका इत्येव कर्तृमात्रेऽपि विप्रतिपत्ते यदि कर्तृस्मरण मिथ्या तदा कर्तृस्मरणवत् अस्मर्यमाणकर्तृकत्वमपि असत्य स्याद्विप्रतिपत्तेरविशेषात् तथा च पुनरप्यसिद्धो हेतु ।–सन्मति० टी० पृ० ४२ । प्रमेयक० पृ० ३९३ । स्या० र० पृ० ६३१ । (१०) कर्तृमात्रस्मरणम् । (११) कर्तृस्मरणवत् । (१२) कर्तृस्मरण । (१३) अस्मर्यमाणकर्तृकत्वात् । (१४) पौरुषेये अनित्ये । (१५) तुलना–"नित्य हि वस्तु न स्मर्यमाणकर्तृक नाप्यस्मर्यमाणकर्तृक प्रतिपन्न किन्त्वकर्तृकमेव ।"–प्रमेयक० पृ० ३९२ ।

1–मोक्त–ब० । 2–यदि विप्र–श्र० । 3 एतदन्तर्गत पाठो नास्ति श्र० । 4 एतदन्तर्गत पाठो नास्ति आ० । 5 अथ कर्तृविशेष विप्रतिपत्ति कर्तृमात्रमपि विप्रतिपत्ते ब० । 6–यमतो ब० ।

इत्यभिधानात्। वेदे च आत्मनः कर्तृसद्भावावेदके सति कथं तत्प्रवृत्तिः ?

"स हि रुद्रं वेदकर्तारम्।" [ ]

"यो ब्रह्माणं विदधाति पूर्वं वेदांश्च प्रहिणोति।" [श्वेताश्व० ६।१८]

"तथा प्रजापतिः सोमं राजानमन्वसृजत, ततस्त्रयो वेदा अन्वसृज्यन्त।" [ ]

इत्यादिको वेदः कर्तृसद्भावावेदकः अनेकधा श्रूयते। स्वरूपासिद्धश्चायं हेतुः, पौराणिका हि वेदस्य ब्रह्मकर्तृकत्वं स्मरन्ति–

"प्रतिमन्वन्तरं चैव श्रुतिरन्या विधीयते।" [मत्स्यपु० १४५।५८]

"अनन्तरं तु वक्त्रेभ्यो वेदास्तस्य विनिःसृताः।" [ ]

इत्यभिधानात्। यौगाः रुद्रकर्तृकत्वम्, जैनाः कालासुरकर्तृकत्वम्।

स्मृतिपुराणादिवच्च ऋषिनामाङ्किताः काण्व-माध्यन्दिन-तैत्तिरीयादयः शाखाभेदाः कथमस्मर्यमाणकर्तृकाः ? तथाहि–एतास्तत्कृतत्वात् तन्नामभिरङ्किताः, तद्दृष्टत्वात्, तत्प्रकाशितत्वाद्वा ? तत्राद्यपक्षे कथमासामपौरुषेयत्वम् अस्मर्यमाणकर्तृकत्वं वा स्यात् ? उत्तरपक्षद्वये यदि तावदुत्सन्ना शाखा कण्वादिना दृष्टा प्रकाशिता वा तदा कथमस्यां सम्प्रदायाविच्छेदः अतीन्द्रियार्थदर्शिनः प्रतिक्षेपश्च स्यात् ? अथ अनवच्छिन्नैव सा

(१) स्वयमेव वेदस्य। (२) अभावप्रमाणप्रवृत्तिः। (३) उद्धृतोऽयम्–स्या० र० पृ० ६३०। रत्नाकराव० ४।१९। (४) "अतीन्द्रियमतावपीष्टा कर्तृणामस्मृतेः किल। सन्त्यस्याप्यनुवक्तार इति धिग् व्यापकं तमः॥ यस्मादिदं साधनमसिद्धमनैकान्तिकञ्च तत्रासिद्धमधिकृत्याह–तथाहीत्यादि। स्मरन्ति सौगता वेदस्य कर्तॄन् अष्टकादीन् आदिशब्दाद् वामकवामदेवविश्वामित्रप्रभृतीन्। हिरण्यगर्भं ब्रह्माणं वेदस्य कर्तारं स्मरन्ति काणादाः वैशेषिकाः ततश्चासिद्धं कर्तुरस्मरणम्।"–प्रमाणवा० स्ववृ० टी० १।२६९। मनोरथ० ३।२६९। 'असिद्धोऽयं हेतुः यस्मात्स्मरन्त्येव कर्तारं काणादाः। तथा लौकिका अपि बहवो वक्तारो भवन्ति ब्रह्मणा वेदाः प्रणीता इति।'–तत्त्वोप० पृ० ११७। 'न च सर्वनृणां वस्तु स्मृतावप्रसिद्धितः। तत्कारणं हि काणादाः स्मरन्ति चतुराननम्। जैनाः कालासुरं बौद्धाः स्वाष्टकान् सकलाः सदा॥'–तत्त्वार्थश्लो० पृ० २३८। अष्टसह० पृ० २३७। प्रमेयक० पृ० ३९१। सन्मति० टी० पृ० ४०। स्या० र० पृ० ६३०। "यच्चान्यदस्मर्यमाणकर्तृकत्वादिति तदसिद्धम्, प्रजापतिर्वा इदमेक आसीन्नाहरासीन्न रात्रिरासीत् स तपोऽतप्यत तस्मात्तपसश्चत्वारो वेदा अजायन्त इत्याम्नायेनैव कर्तृस्मरणात्, जीर्णकूपादिभिर्व्यभिचाराच्च।"–प्रश० कन्द० पृ० २१६। "कपिलकणादगौतमजैमिन्यादिभिराचार्यपर्यन्तं वेदे सकर्तृत्वस्मरणस्य प्रतीयमानत्वात्।'–तत्त्वचि० शब्द० पृ० ३७१। (५) उद्धृतोऽयम्–न्यायमं० पृ० २३६। प्रमेयक० पृ० ३९२। स्या० र० पृ० ६३०। वादपरि० पृ० ३८३। तत्त्वचि० शब्द० पृ० ३७३। (६) तुलना–"सजन्ममरणर्षिगोत्रचरणादिनामश्रुतेरनेकपदसंहतिप्रतिनियमसन्दर्शनात्। फलार्थिपुरुषप्रवृत्तिविनिवृत्तिहेत्वात्मनां श्रुतेश्च मनुसूत्रवत्पुरुषकर्तृकैव श्रुतिः॥"–पात्रकेस० श्लो० १४। प्रमेयक० पृ० ३९२। स्या० र० पृ० ६३०। प्रमेयर० ३।९९। (७) काण्वमाध्यन्दिनतैत्तिरीयाद्याः शाखाः। तुलना–'एतास्तत्कृतत्वात्तन्नामभिरङ्कितास्तद्दृष्टत्वात् तत्प्रकाशितत्वाद्वा।'–प्रमेयक० पृ० ३९२। स्या० र० पृ० ६३०। रत्नाकराव० ४।९। (८) विच्छिन्ना विस्मृता वा। (९) शाखायाः।

1 कर्तृत्वम्–ब०, श्र०। 2–कर्तृत्वम् ब० श्र०। 3–नवच्छिन्ना आ०।

सम्प्रदायेन दृष्टा प्रकाशिता वा, तर्हि यावद्भिरुपाध्यायैः सा दृष्टा प्रकाशिता वा तावतां नामभिः तस्याः किन्नाङ्कितत्वं स्यादविशेषात् ?

अथोच्यते–अस्ति यौगानां वेदे कर्तृस्मरणं किन्तु सविगानं तत्कर्तृविशेषे विप्रतिपत्तेः अतोऽप्रमाणमिति, तदप्युक्तिमात्रम्, यतः कर्तृविशेषे विप्रतिपत्तेः तद्विशेषस्मरणमेवाप्रमाणं स्यात् न कर्तृमात्रस्मरणम्, अन्यथा कादम्बर्यादीनामपि कर्तृविशेषे विप्रतिपत्तेः कर्तृमात्रस्मरणस्याप्रमाणत्वेन अस्मर्यमाणकर्तृकत्वस्य तत्रापि (तत्रापि) गतत्वादनेकान्तः। अथ वेदे कर्तृविशेषे विप्रतिपत्तिवत् कर्तृमात्रेऽपि विप्रतिपत्तेः तन्मात्रस्मरणमप्यप्रमाणं कादम्बर्यादीनां तु कर्तृविशेषे एव विप्रतिपत्तेः तदप्रमाणमित्यतो नानेकान्तः, ननु वेदे सौगतादयः कर्तारं स्मरन्ति न मीमांसकाः इत्येवं कर्तृमात्रे विप्रतिपत्तेः यदि तदप्रमाणम्, तर्हि तद्वत् तत्स्मरणमप्यप्रमाणं किन्न स्यात् विप्रतिपत्तेरविशेषात्। तथा चार्यमसिद्धो हेतुः।

विरुद्धश्च, स्मर्यमाणकर्तृकत्वाऽस्मर्यमाणकर्तृकत्वयोः कार्यधर्मतया विपक्ष एव वर्तमानत्वात्। कार्यमेव हि किञ्चित् स्मर्यमाणकर्तृकं दृष्टं घटादि, किञ्चिदस्मर्यमाणकर्तृकं जीर्णकूपादि। ततश्च कृतको वेदः अस्मर्यमाणकर्तृकत्वात् जीर्णकूपादिवत्। नहि नित्य

(१) "समाख्यापि च शाखानां नाद्यप्रवचनादृते। काठकं कालापकमित्यादयो हि समाख्याविशेषाः शाखाविभागानामनुस्मर्यन्ते। ते च न प्रवचनमात्रनिबन्धनाः प्रवक्तॄणामनन्तत्वात्। नापि प्रकृष्टप्रवचननिमित्ता, उपाध्यायेभ्योऽपि प्रकर्षे प्रत्युत यथापाठकरणदोषात्, तत्पाठानुकरणे च प्रकर्षाभावात्। अतः चानादौ संसारे प्रकृष्टाः प्रवक्तारः इति को नियामकः इति।"–न्यायकुसु० ५।१७। (२) "येऽपि हि पौरुषेयतां मन्यन्ते तेऽपि नैव परम्परया तत्र कर्तृविशेषस्मरणं शक्नुवन्ति वक्तुम्, सामान्यतोदृष्टेन कर्तारमनुमाय स्वाभिमतं कर्तारं तत्र निक्षिपन्ति–केचिदीश्वरम् अन्ये हिरण्यगर्भम्, अपरे प्रजापतिम्। न चायं नानाविधो विवादः परम्परया कर्तरि मन्वादिवत् स्मर्यमाणे कथञ्चिदवकल्पते। नहि मानवं भारतं शाक्यग्रन्थं वा कर्तृविशेषं प्रति कश्चिद्विवदते। तस्मात् स्मर्तव्यस्य सत्यस्मरणाद् दृश्यादर्शनबाधितं सामान्यतोदृष्टं न शक्नोति कर्तारमवसाययितुम्।"–शास्त्रदी० पृ० ६१७। (३) सविवादम्। (४) दृष्ट–आ० टि०। (५) तुलना–"न चैवं कर्तृविशेषे विप्रतिपत्तेस्तद्विशेषस्मरणमेवाप्रमाणं स्यात् न कर्तृमात्रस्मरणम्।"–प्रमेयक० पृ० ३९३। सन्मति० टी० पृ० ४२। स्या० र० पृ० ६३०। न्यायवा० ता० पृ० ३८४ ।। (६) कादम्बर्यादिष्वपि। (७) तुलना–"अथ वेदे कर्तृविशेषे विप्रतिपत्तिवत् कर्तृमात्रेऽपि विप्रतिपत्तेः तत्स्मरणमप्यप्रमाणम्"–प्रमेयक० पृ० ३९३। सन्मति० टी० पृ० ४२। स्या० र० पृ० ६३०। (८) कर्तृमात्रस्मरणम्। (९) तुलना–"ननु वेदे सौगताः कर्तृमात्रं स्मरन्ति न मीमांसकाः इत्येवं कर्तृमात्रेऽपि विप्रतिपत्तेः यदि कर्तृस्मरणं मिथ्या तर्हि कर्तृस्मरणेन अस्मर्यमाणकर्तृकत्वमपि असत्यं स्याद्विप्रतिपत्तेरविशेषात् तथा च पुनरप्यसिद्धो हेतुः।–सन्मति० टी० पृ० ४२। प्रमेयक० पृ० ३९३। स्या० र० पृ० ६३१। (१०) कर्तृमात्रस्मरणम्। (११) कर्तृस्मरणवत्। (१२) कर्तृस्मरणं। (१३) अस्मर्यमाणकर्तृकत्वात्। (१४) पौरुषेये अनित्ये। (१५) तुलना–"नित्यं हि वस्तु न स्मर्यमाणकर्तृकं नाप्यस्मर्यमाणकर्तृकं प्रतीतम् किन्त्वकर्तृकमेव।"–प्रमेयक० पृ० ३९२।

1–नां कर्तृ–ब०। 2–यैव विप्र–श्र०। 3 एतदन्तर्गतः पाठो नास्ति श्र०। 4 एतदन्तर्गतः पाठो नास्ति आ०। 5 अथ कर्तृविशेषे विप्रतिपत्ति... ...पत्ते ब०। 6–गमतो ब०।

वस्तु स्मर्यमाणकर्तृकमस्मर्यमाणकर्तृकं वा प्रतिपन्नम्, किन्तु अकर्तृकमेव। कालात्ययापदिष्टश्च, श्रुतिस्मृतिबाधितपक्षनिर्देशानन्तरं प्रयुक्तत्वात्। ततो न कर्तृस्मरणाभावलक्षणमस्मर्यमाणकर्तृकत्वं घटते।

नापि अकर्तृकत्वलक्षणम्, अशब्दार्थत्वात्। नहि अस्मर्यमाणकर्तृकत्वशब्दस्य अकर्तृकत्वमर्थो लोके शास्त्रे वा प्रसिद्धः। प्रसिद्धौ वा साध्याविशिष्टत्वम्। अस्तु वाऽविचारितमणीयमस्मर्यमाणकर्तृकत्वम्, तथापि तद् वादिनः, प्रतिवादिनः, सर्वस्य वा सम्बन्धि हेतुः स्यात्? यदि वादिनः, तदनैकान्तिकम्, "वटे वटे वैश्रवणः" [ ] इत्यादिषु विद्यमानकर्तृकेष्वपि प्रयोजनाभावात् मीमांसकैरस्मर्यमाणकर्तृकेषु अस्य सद्भावात्। ननु वेदे कर्त्रभावपूर्वकमस्मर्यमाणकर्तृकत्वं हेतुः, तच्चात्र नास्ति कर्त्रनुपलम्भमात्रपूर्वकत्वात्तत्र तस्य तत्कथमनैकान्तिकत्वम्? इत्यपि मनोरथमात्रम्, यतः कुतोऽत्र कर्त्रभावसिद्धिः-प्रमाणान्तरात्, अत एव वा? यदि प्रमाणान्तरात्, तदाऽस्य आनर्थक्यम्। अत एव चेत्, अन्योन्याश्रयः-अतो हि अनुमानात् तदभावसिद्धौ तत्पूर्वकमस्मर्यमाणकर्तृकत्वं सिद्ध्यति, तत्सिद्धौ च अतोऽनुमानात्तदभावसिद्धिरिति। अथ प्रतिवादिनः सम्बन्धि तत् हेतुत्वेन विवक्षितम्, तदसिद्धम्, तत्र हि प्रतिवादी स्मरत्येव कर्तारम्। एतेन सर्वस्याऽस्मरणं प्रत्याख्यातम्, सर्वात्मज्ञानविज्ञानरहितो वा कथं सर्वस्य तत्र कर्तृस्मरणं नेति? अतोऽस्य अज्ञातासिद्धत्वम्, सतोऽप्यर्थस्य असर्वविदा ज्ञातुमशक्यत्वात्।

(१) साध्यं हि अपौरुषेयत्वं तच्च अकर्तृकत्वमिति साध्याविशिष्टत्वाद् असिद्धो हेत्वाभासो लभ्यते साध्यस्य असिद्धत्वादिति। (२) तुलना-'किञ्च अस्मर्यमाणकर्तृकत्वं वादिनः प्रतिवादिनः सर्वस्य वा स्यात्। -प्रमेयक० पृ० ३९५। सन्मति० टी० पृ० ३०। स्या० र० पृ० ६३१। प्रमेयर० ३।९९। 'अपि च किमापजनस्मरणविनिवृत्तिरिह हेतुत्वेन विवक्षिता आहोस्वित् कतिपयपुरुषस्मरणविनिवृत्तिः। -तत्त्वोप० पृ० ११७। (३) तुलना- अनैकान्तिकत्वमप्याह-दृश्यन्ते चेत्यादि। उपदेशपारम्पर्यस्य सम्प्रदायविच्छेदे क्रियासम्प्रदाये पुरुषकृतत्वसम्प्रदायो यथा वटे वटे वैश्रवणादि शब्दाना ते तथा। अनेन अस्मर्यमाणकर्तृकत्वमाह। कृतकाश्च पौरुषेयाश्च। तत पौरुषेयेऽपि वाक्ये कर्तुरस्मरणं वर्तत इत्यनैकान्तिको हेतुः।'-प्रमाणवा० स्ववृ० टी० १।२४२। स्या० र० पृ० ६३१। 'वादिनश्चेदनैकान्तिकम् सा ते भवतु सुप्रीतेत्यादौ विद्यमानकर्तृकेऽप्यस्य भावात्।'-प्रमेयक० पृ० ३९५। (४) वटे वटे श्रवण' इत्यादिवाक्येषु। (५) अस्मर्यमाणकर्तृकत्वस्य। (६) वेदे। तुलना- यत कुतोऽत्र कर्त्रभावसिद्धिः प्रमाणान्तरात्तत एव वा?-स्या० र० पृ० ६३१। (७) अस्मर्यमाणकर्तृकत्वस्य हेतोः। (८) वेदे कर्त्रभावसिद्धौ। (९) अस्मर्यमाणकर्तृकत्वसिद्धौ च। (१०) अस्मर्यमाणकर्तृकत्वम्। (११) तुलना-'तद्यदि सकलजनस्मरणनिवृत्तिः तन्नाऽसिद्धा अवधारयितुमशक्यत्वाच्च अर्वाग्भागविद्भिः। अवधारणे वा त एव सर्वज्ञाः स्युः अर्वाग्भागविदो न भवयुः।'-तत्त्वोप० पृ० ११७। न्यायमं० पृ० २३७। प्रमेयक० पृ० ३९५। स्या० र० पृ० ६३१। (१२) वेद विषये। (१३) सकलसर्वज्ञ कर्त्रस्मरणस्य।

1-नास्तिकस्य शब्दस्य ब० -अकर्तृत्वं शब्दस्य आ०। 2 कर्तृत्वभाव-श्र०। 3-स्यात्स्य ब०। 4 अज्ञातासि-श्र०।

यदप्युक्तम्–'ये हि यदर्थानुष्ठाने प्रवर्त्तन्ते तेऽवश्यं तच्छास्त्रकर्त्तारमनुस्मरन्ति' इत्यादि, तदप्यनल्पतमोविलसितम्, नियमाभावात्। न हि 'यो धर्मशील' [    ] इत्यादिवाक्येभ्यः तदर्थानुष्ठाने प्रवर्त्तमानानामनुष्ठातॄणां तत्कर्त्तृस्मरणमस्ति, तदन्तरेणापि धर्मशीलताद्यर्थानुष्ठाने महापुरुषार्थोपयोगिन्यैहिकपारत्रिकभयाऽभावहेतौ प्रवृत्तिप्रतीतेः।

यच्चान्यदुक्तम्–'छिन्नमूलत्वाच्च' इत्यादि, तदप्यसुन्दरम्, यतः अध्यक्षेणानुभवाभावात् तत्र तच्छिन्नमूलम्, प्रमाणान्तरेण वा? अध्यक्षेण चेत्, किं भवत्सम्बन्धिना, सर्वसम्बन्धिना वा? यदि भवत्सम्बन्धिना, तर्हि आगमान्तरेऽपि कर्त्तृसद्भावग्राहकत्वेन भवत्प्रत्यक्षस्याऽप्रवृत्तेः तत्कर्त्तृस्मरणस्य छिन्नमूलत्वेन अस्मर्यमाणकर्त्तृकत्वस्य भावाद् व्यभिचारी हेतुः। अथ तत्र तद्ग्राहकत्वेन अस्मत्प्रत्यक्षस्याप्रवृत्तावपि परैः कर्त्तृसद्भावाभ्युपगमान्न व्यभिचारः, तन्न, परकीयाभ्युपगमस्य भवतोऽप्रमाणत्वात्, अन्यथा वेदेऽपि परैस्तत्सद्भावाभ्युपगमात् अस्मर्यमाणकर्त्तृकत्वादित्यसिद्धो हेतुः स्यात्। सर्वसम्बन्धिना चेत्, सोऽसिद्धः, अर्वाग्दृशा तस्यावसातुमशक्यत्वात्। अथ प्रमाणान्तरेण अनुभवाभावः, तन्न, आगमस्य तत्र कर्त्तृसद्भावावेदकस्य प्रतिपादितत्वात्। रचनावत्त्वाद्यनुमानस्य च तत्प्रसाधकस्य सद्भावात्। तथाहि पौरुषेयो वेदः रचनावत्त्वात् भारतादिवत्, पदवाक्यात्मकत्वाद्वा तद्वत्। तथा प्रमाणान्तरविषयभाञ्जि वैदिकानि वाक्यानि

(१) पृ० ७२१ पं० ८। (२) "न चायं नियमोऽनुष्ठानसमये तत्कर्तारमनुस्मृत्यैव प्रवर्तेत"–प्रमेयक० पृ० ३९५। सन्मति० टी० पृ० ४३। शास्त्रवा० यशो० पृ० २८४ B। "न हि यो धर्मशील इत्यादिवाक्येभ्यस्तदर्थानुष्ठाने प्रवर्तमानानामनुष्ठातॄणां तत्कर्तृस्मरणमस्ति। तदन्तरेणापि धर्मशीलताद्यर्थानुष्ठाने महापुरुषार्थोपयोगिन्यैहिकपारत्रिकभयाभावहेतौ प्रवृत्तिप्रतीतेः।"–स्या० र० पृ० ६३१। (३) पृ० ७२२ पं० ९। (४) 'यतोऽध्यक्षेण तदनुभवाभावात्तत्र तच्छिन्नमूलं प्रमाणान्तरेण वा।'–प्रमेयक० पृ० ३९३। सन्मति० टी० पृ० ४२। स्या० र० पृ० ६३१। (५) वेदे। (६) कर्तृस्मरणम्। (७) तुलना–"सर्वादृष्टिश्च संदिग्धा स्वादृष्टिर्व्यभिचारिणी। विन्ध्याद्रिरन्ध्रदूर्वादेरदृष्टावपि सत्त्वतः॥"–तत्त्वसं० पृ० ६५। न्यायवि० टि० पृ० १६७ पं० ३। न्यायली० पृ० २२। (८) आगमान्तरकर्तृस्मरणस्य। (९) आगमान्तरे। (१०) मीमांसकस्य। (११) जैनादिभिः। (१२) कर्तुरनुभवाभावः। (१३) वेदस्मृतिरूपस्य। (१४) तुलना–"बुद्धिपूर्वा वाक्यकृतिर्वेदे–वाक्यकृतिर्वाक्यरचना सा बुद्धिपूर्वा वक्तुर्यथार्थवाक्यार्थज्ञानपूर्वा वाक्यरचनात्वात्, नदीतीरे पञ्च फलानि सन्तीत्यस्मदादिवाक्यरचनावत्।"–वैशे० सू०, उप० ६।१।१। "बुद्धिपूर्वा वाक्यकृतिर्वाक्यरचना वेदे तद्रचनात्वात् उभयाभिमतवाक्यरचनावत्।"–प्रश० व्यो० पृ० ५८१। प्रश० कन्द० पृ० २१७। "तथा च वैदिको रचना कर्तृपूर्विका रचनात्वाल्लौकिकरचनावत्।"–न्यायम० पृ० २३२। स्या० र० पृ० ६३२। "ततो ये नररचितवचनरचनाऽविशिष्टास्ते पौरुषेया यथाऽभिनवकूपप्रासादादिरचनाऽविशिष्टा जीर्णकूपप्रासादादयः, नररचितवचनरचनाऽविशिष्टञ्च वैदिकं वचनमिति।"–प्रमेयक० पृ० ४०२। सन्मति० टी० पृ० ३९। (१५) तुलना–"इतश्च वर्णवत्त्वात्, वर्णवन्ति लौकिकवाक्यानि अनित्यानि तथा च वेदवाक्यानि, तस्मात्तान्यप्यनित्यानि। इतश्च सामान्यविशेषवत्त्वे सति श्रोत्रग्राह्यत्वात् लौकिकवाक्यवत्। इतश्च

1–र्णमिति ब०। 2–त्रिकभयाद्वारहेतौ   ककतयाभावहेतौ आ०। 3 तत्रकर्त्तृ–ब०। 4 अथतदप्रा–ब०।

आप्तोक्तानि, वाक्यत्वे सति प्रमाणत्वात्, यदित्थं तत्तथा यथा पित्रादिवाक्यम्, तथा चामूनि, तस्मात्तथेति ।

यच्चान्यदभिहितम्–'वेदरचनायाः कर्तृपूर्वकरचनाविलक्षणत्वात्' इत्यादि, तत्र किमिदं तस्याः तद्वैलक्षण्यं नाम–दुर्भणत्वम्, दुःश्रवणत्वम्, लोकव्याकरणप्रसिद्धशब्दवैलक्षण्येन शब्दसन्निवेशः, अपूर्वछन्दोनिबद्धत्वम्, अतीन्द्रियार्थप्रतिपादकत्वम्, महाप्रभावोपेतमन्त्रयुक्तत्वं वा ? सर्वमेतत् पुरुषाणां न दुष्करम्, विज्ञानकरणपाटवाधीनत्वाद् वाचोवृत्तेः । मन्त्राणाञ्च महाप्रभावोपेतत्वं पुरुषप्रणीतत्वेनैवोपपन्नम्, निरतिशयप्रभाववता हि पुरुषेण

पन्यत्वात् लौकिकवाक्यवत् ।'–न्यायवा० पृ० २७२ । अनित्यानि वेदवाक्यानि वाक्यत्वादुभयाभिमतवाक्यवत् ।'–प्रश० व्यो० ५८१। "न चाम्नायस्यापौरुषेयत्वे यतः स्वतः प्रमाणं वेदः स्यात् शास्त्रान्तरस्यापि तदनुपपत्तेः विशेषाभावाच्च ।'–सिद्धिवि० टी० पृ० ४०६ B । वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् भारतादिपदवाक्यवत् । –प्रमेयक० पृ० ३९१ । 'श्रुतिः पौरुषेयी वर्णाद्यात्मकत्वात् कुमारसम्भवादिवत् । –रत्नाकराव० ४।९।

(१) पृ० ७२२ पं० ११। (२) तुलना–'दुर्भणत्वानुदात्तत्वक्लिष्टत्वाऽश्रव्यतादयः । वेदधर्मा हि दृश्यन्ते नास्तिकादिवचस्स्वपि ॥ विषापगमभूत्यादि यच्च किञ्चित्समीक्ष्यते । सत्यं तद्वचनेष्वपि मन्त्रवादेष्वपि दृश्यते । दुर्भणत्वं दुरभिधानम्, अनुदात्तत्वं मनोज्ञत्वम् क्लिष्टं व्यवहितम्, अश्रव्यता श्रुतिदुर्भगता । आदिशब्देन पदविच्छन्दस्तोमादिपरिग्रहः । विषापगमे भूतिः सामर्थ्यं प्रभाव इति यावत् । अथवा विषापगमश्च भूतिश्चेति समासः, भूतिर्विभूतिरैश्वर्यमिति यावत् । आदिशब्देन भूतग्रहाद्यावेशनयनीकरणाभिचारादयो गृह्यन्ते । सत्यमिति अविसंवादि । वचनेष्वादिशब्देन बौद्धादिमन्त्रादिपरिग्रहः । –तत्त्वसं० प० पृ० ७३९ । 'सर्वेषां दुर्भणत्वादीनां मन्त्रादिसामर्थ्यानाञ्च साधारणत्वात् । –प्रमाणवा० मनोरथ० ३।२४२। "दुर्भणत्वदुःश्रवणादीनामस्मदाद्युपलभ्यानां तच्छास्त्रान्तराणां शक्यक्रियत्वादितरत्रापि ।"–अष्टश० अष्टसह० पृ० २३७ । स्या० र० पृ० ६३२। रत्नाकराव० ४।९। (३) तुलना– अपि चेद मन्त्रा अपौरुषेया इति व्याहतं पश्यामः । तथाहि –'समयत्वे हि मन्त्राणां कस्यचित् कार्यसाधनम् । यदि न यद्यते मन्त्राः कस्यचित्समयो यथा मत्प्रणीतमेतदभिमतार्थोपनिबन्धनं वाक्यमेव नियुञ्जानमनेनार्थेन योजयामीति परार्थपरतानुरोधेन अन्यतो वा कुतश्चित्सिद्धो स्यात् तदा मन्त्रप्रयोगात् कदाचिदर्थनिष्पत्तियुक्ता कविसमयादिव पाठकानाम् । –प्रमाणवा० स्ववृ० ३।२९४। अपि च न मन्त्रो नामान्यः कश्चित् । किं तर्हि ? सत्यवादि । यथाभूताख्यानं सत्यम्, इन्द्रियमनसोर्दमनं तपः तयोः प्रभावो विषस्तम्भनादिसामर्थ्यं स विद्यते येषां पुंसां ते तथा तेषां सत्यतपःप्रभाववतां पुंसां समीहितार्थस्य साधनं तदेव मन्त्रः । तदुक्तं मन्त्राणामपौरुषेयत्वेऽपि पुरुषेषु दृश्यत एव । किं कारणम् ? यथास्वं सत्याधिष्ठानबलात् विषदहनादेः स्तम्भनस्य सामर्थ्योपघातस्य दर्शनात् । तथा शबराणां केषाञ्चित् स्वनियमस्थानामद्यापि विषापनयनशक्तियुक्तस्य कारणात् शक्नुवन्त्येव पुरुषा मन्त्रान् कर्तुम् । अवैदिकानाञ्च–वेदादन्येषां बौद्धादीनामिति, आदिशब्दात् आर्हतमाहेश्वरादीनां मन्त्रकल्पानां मन्त्राणां मन्त्रकल्पानाञ्च दर्शनात् । विद्याक्षराणि मन्त्राः तत्साधनविधानोपदेशा मन्त्रकल्पाः तेषाञ्च बौद्धादीनाम्मन्त्रकल्पानां पुरुषकृतत्वं पुरुषकरणात् । –प्रमाणवा० स्वव० टी० पृ० ३४२। 'यदपि मन्त्रविदः केचिन्मन्त्रान् कांश्चन कुर्वते । प्रभोः प्रभावः स्तेषां स तदुक्तन्यायवृत्तिनः ॥ कृतकाः पौरुषेयाश्च मन्त्राः वाच्या फलेष्वमी। अशक्तिसाधनं पुंसामनेनैव निराकृतम् । –प्रमाणवा० ३।३०९–१०। परोक्षाया मन्त्रशक्तेरपि दर्शनात् । न ह्याथर्वणानामेव मन्त्राणां शक्तिरुपलभ्यते न पुनः सौगतादिमन्त्राणामिति शक्यं वक्तुं प्रमाणबाधनात् । –अष्टश० अष्टसह० पृ० २३७। स्या० र० पृ० ६३३। 'मन्त्रादीनाञ्च सामर्थ्यं शाबरणामपि स्फुटम् ।

'अमुष्मान्मन्त्रादस्येदं फलं भवतु' इत्यनुसन्धाय यदा यया कयाचित् भाषया प्रयुज्यन्ते मन्त्राः तदा तेषां तत्कर्तृप्रभावादेव तथाविधार्थक्रियाकरणसामर्थ्यं सम्भाव्यते । दृश्यते हि साम्प्रतमपि महाप्रभाववतो मन्त्रवादिन आज्ञाप्रदानात् ज्वराद्युच्चाटनं निर्विषीकरणादि च।

किञ्च, अत्र विशिष्टा रचना दृश्यमाना तत्करणासमर्थमेव कर्त्तारं प्रतिक्षिपति नतु कर्तृमात्रम् । न हि जीर्णकूपप्रासादादौ विशिष्टा रचनोपलभ्यमाना तन्मात्रं प्रतिक्षिपन्ती प्रतीता, तत्करणासमर्थस्यैव शिल्पिनः तया प्रतिक्षेपात् । नहि कर्त्रन्वयव्यतिरेकानुविधायिनो धर्माः कर्त्तारमन्तरेण उपपद्यन्ते । अतः 'वैदिकी रचनाऽपौरुषेयी' इत्याद्यनुमानमनुपपन्नम्, दृष्टकर्तृकरचनाविलक्षणत्वस्य उक्तप्रकारेण तत्राऽसम्भवात् । सम्भवे वा कर्तृमात्रानिषेधकत्वात् । ततोऽयुक्तमुक्तम्–'रचनामात्रात्कर्त्रनुमाने जगतो बुद्धिमद्धेतुकत्वानुमानानुषङ्गः' इत्यादि, वेदरचनायाः कर्तृपूर्वकरचनाविलक्षणत्वाव्यवस्थितेः, जगद्रचनायास्तु तैरिष्यते । तत्स्थितिश्च ईश्वरनिराकरणप्रघट्टके सप्रपञ्चं प्रपञ्चिता ।

यदप्युक्तम्–'वेदाध्ययनं सर्वं गुर्वध्ययनपूर्वकम्' इत्यादि, तत्र निर्विशेषणमध्ययनशब्दवाच्यत्वम् अपौरुषेयत्वं प्रतिपादयेत्, सविशेषणं वा ? तत्र आद्यविकल्पेऽनैकान्तिकत्वम्, निश्चितकर्तृकेषु भारतादिष्वप्यस्य भावात् । द्वितीयपक्षे तु किं तस्य विशेषणम् ? वेदश्चेत्, ननु वेदविशिष्टमप्यध्ययनं किं तावन्मात्रेण हेतुः, अपरविशेषणवि-

प्रतीत भवलाकेऽपि न चाप्यव्यभिचारि तत् ॥"–तत्त्वसं० १०।४४।

(१) संस्कृतरूपया प्राकृतस्वरूपया पालिरूपया वा भाषया । (२) वेदे । तुलना–"अपि च यद्विलक्षणय रचना तद्विलक्षण एव कर्ता अनुमीयतां न पुनस्तदपलापो युक्त इत्यप्युक्तम् ।' –न्यायम० पृ० २३६ । "अपि चात्र विशिष्टा रचना दृश्यमाना तत्करणासमर्थमेव कर्तारं निराकुरुते न पुनः कर्तृमात्रमपि ।"–स्या० र० पृ० ६३४। (३) अनुमानम् । (४) विशिष्टरचनया । (५) वेदे । (६) पृ० ७२२ पं० १२ । (७) कर्तृपूर्वकरचनाविलक्षणत्वास्थितेः, यतो हि विद्यमानकर्तृकेषु अक्रियादर्शिनोऽपि कृतबुद्धिरुपजायते नतु क्षित्यादौ । (८) पृ० १०२। (९) पृ० ७२२ पं० १७। (१०) तुलना–"किञ्चात्र निर्विशेषणमध्ययनशब्दवाच्यत्वमपौरुषेयत्वं प्रतिपादयेत् कर्तृस्मरणविशिष्टं वा ?"–प्रमेयक० पृ० ३९९। सन्मति० टी० पृ० ४१। स्या० र० पृ० ६३४। (११) तुलना–"यत एवन्तस्मादध्ययनमध्ययनान्तरवत् अध्ययनान्तरपूर्वकमिति साध्ये अध्ययनादिति लिङ्गं व्यभिचारि, भारताद्यध्ययने पौरुषेयत्वाध्ययनत्वस्य भावात् ।"–प्रमाणवा० स्ववृ० टी० पृ० ३४५ । "न हि तच्छब्दवाच्यत्वकृतमनादित्वमुपपद्यते । अनैकान्तिकश्चायं हेतुः, भारतेऽप्येवमभिधातुं शक्यत्वात् । भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकं भारताध्ययनवाच्यत्वादिदानीन्तनभारताध्ययनवदिति ।'–न्यायम० पृ० २३३ । प्रमेयक० पृ० ३९९ । सन्मति० टी० पृ० ४१ । स्या० र० पृ० ६३४ । "पिटकत्रयादावपि तत एव वक्त्रभावप्रसङ्गात् । वेदाध्ययनवक्तिरस्यापि भवदाध्ययनपूर्वाध्ययनत्वप्रक्लृप्तौ न वक्त्रवशीभवति, यतो विद्यमानवक्तृकेऽपि भावादध्ययनवाच्यत्वस्यानैकान्तिकत्वं न स्यात् ।'–अष्टश० अष्टसह० पृ० २३७ । "भारताध्ययनं सर्वं गुर्वध्ययनपूर्वकम् । तदध्ययनवाच्यत्वादधुनाध्ययनं यथा ॥" –प्रमेयर० ३।९०। (१२) अध्ययनशब्दवाच्यत्वादिति हेतोः ।

1 भवति ब० । 2 'तदा' नास्ति आ० । 3–मानत करण–श्र० । 4 ननु आ० । 5 तया आ० । 6–द्धेतुत्वानु–आ० । 7 भारतेष्वप्यस्य ब० । 8 सद्भावात् ब०, श्र० । 9 वेदश्चेन्ननु श्र० ।

शिष्टत्वेन वा ? यदि तावन्मात्रेण, तदाऽनैकान्तिकत्वम्[1], विपक्षेऽप्यस्य[2][3] अविरुद्धतया सद्भाव-सम्भवात्। विपक्षेण विरुद्धं हि विशेषणं ततो हेतुं व्यावर्त्तयति नान्यद् अतिप्रसङ्गात्। न च वेदविशेषणं कर्तृपूर्वकत्वलक्षणविपक्षेण विरुद्धम् भारताध्ययनवद् वेदाध्ययनस्यापि सकर्तृकत्वेऽप्यविरोधात्।

किञ्च, यथाभूतानां[5] पुरुषाणामध्ययनम् अध्ययनपूर्वकं[6] दृष्टं तथाभूतानामेव तत्तथा[7][8] साध्यते, अन्यथाभूतानां[9] वा ? यदि तथाभूतानाम्[10], तदा सिद्धसाधनम्। अथ अन्यथाभूतानाम्, तर्हि जगतो बुद्धिमद्धेतुकत्वे सन्निवेशादिवदप्रयोजको[11] हेतुः। अथ तथाभूता[12]नामेव तत्तथा[13][14] साध्यते, न च सिद्धसाधनम्, सर्वपुरुषाणामतीन्द्रियार्थदर्शनशक्तिवैकल्येन अतीन्द्रियार्थप्रतिपादकप्रेरणाप्रणेतृत्वाऽसामर्थ्येन[15] ईदृशत्वात्[16], तदप्यसुन्दरम्, प्रेरणाया[17]

(१) तुलना–"वेदेन विशेषणाददोषः अध्ययनमात्रस्य हि व्यभिचारो न वेदेन विशिष्टस्याध्ययनस्येत्यभिप्रायः। न पुनरित्यादि सिद्धान्तवादी। कोऽतिशयो वेदाध्ययनस्य येन तद्वेदाध्ययनमन्यथा स्वयं कृत्वाऽध्येतुं न शक्यते। नव कश्चिदतिशयः। ततो वेदाध्ययनञ्च स्यात् न च अध्ययनपूर्वकमिति विरोधाभावात् स एव व्यभिचारः। यस्माद्धि विशेषणं वेदत्वम् अविरुद्धं विपक्षेण अनध्ययनान्तरपूर्वकत्वेन सह अस्माद् विपक्षात् हेतुं निवर्तयति। किं कारणम् ? अविरुद्धयोर्वेदत्व-अध्ययनान्तरपूर्वकत्वयोरेकत्र वेदवाक्ये सम्भवात्। को ह्यत्र विरोधो यद् वेदाध्ययनञ्च स्यात् न च अध्ययनान्तरपूर्वकमिति। तस्माद्वेदत्वं विशेषणमध्ययनस्य हेतोरतिशयभाग् न भवति विशेषाधायकं न भवति विपक्षविरोधाभावेन विपक्षाद् व्यावर्तनात् उपात्तमपि विशेषणमनुपात्तसमम्।"–प्रमाणवा० स्ववृ० टी० पृ०३४५। प्रमेयक० पृ०३९७। स्या० पृ० ६३४। (२) अनध्ययनपूर्वकाध्ययने सकर्तृके (३) वेदविशेषणस्य अध्ययनशब्दवाच्यत्वस्य। (४) विपक्षात्। (५) अस्मदादीनाम् अर्वाग्दृशाम्। तुलना–"किञ्च यथाभूतानां पुरुषाणामध्ययनमध्ययनपूर्वकं दृष्टं तथाभूतानामेव अध्ययनशब्दवाच्यत्वमध्ययनपूर्वकत्वं साधयति अन्यथाभूतानां वा ? –प्रमेयक० पृ०३९८। सन्मति० टी० पृ० ४१। स्या०र० पृ० ६३४। (६) गुर्वध्ययनपूर्वकम्। (७) वेदाध्ययनम्। (८) वेदाध्ययनपूर्वकम्। (९) अतीन्द्रियार्थदर्शनशालिनां पुरुषाणां वा। (१०) अस्मदादीनाम्। तुलना–'यादृशं स्वध्ययनं स्वयङ्कर्तुमशक्तस्य तन्निमित्तम् अध्ययनान्तरनिमित्तं दृष्टं तत्तथाविधमध्ययनान्तरपूर्वकमेवेति स्यात् तन्निमित्ततया शक्तिनिमित्ततया दृष्टत्वगते विशेषे स्वयं कृत्वाऽध्ययनलक्षणे तत्त्यागेन तस्य विशेषस्य त्यागेन वेदाध्ययनत्वसामान्यस्य ग्रहणं शक्तस्याशक्तस्य वा सर्वं वेदाध्ययनमध्ययनान्तरपूर्वकं वेदाध्ययनत्वसामान्यादिति क्रियमाणं व्यभिचार्येव। किमिव ? कृतान्तसिद्धो अग्निसिद्धो धूमवद् यत्नवत्–प्रमाणवा० स्ववृ० टी० पृ० ३४६। (११) यादृशं सन्निवेशादि घटादिषु यदक्रियादर्शिनोऽपि कृतबुद्ध्युत्पादकं दृष्टं तादृशमेव जीर्णकूपादौ बुद्धिमद्धेतुकत्वमनुमापयति ननु वृक्षादिगतम्–अक्रियादर्शिनः कृतबुद्ध्यनुत्पादकमिति स्थिति, तथापि सन्निवेशसामान्यात् पृथिव्यादावपि बुद्धिमद्धेतुकत्वानुमाने मृद्विकारत्वहेतुना वल्मीकस्यापि कुम्भकारकृतत्वं स्यात्। ततो यथा जगतो बुद्धिमद्धेतुकं सन्निवेशादिसामान्यमकिञ्चित्करं तथैव यादृशानाम् अस्मदादिपुरुषाणामध्ययनमध्ययनान्तरपूर्वकं दृष्टं तादृशानामेव देशान्तरादौ अध्ययनपूर्वकत्वं साधयितुमुचितं न तु अस्मादृशानामतीन्द्रियार्थद्रष्टॄणाम् तत्र अध्ययनशब्दवाच्यत्वस्य अप्रयोजकत्वादिति भावः। (१२) अस्मदादीनामर्वाग्दृशाम्। (१३) अध्ययनम्। (१४) अध्ययनपूर्वकम्। (१५) अन्यथाभूतातीन्द्रियपुरुषाणामभावनया। (१६) अस्मदादिवत् अर्वाग्दर्शित्वात्। (१७) वेदस्य।

1 कृतत्वलक्षण–ब०। 2 –त्वविलक्ष–श्र०। 3 –पूर्वं दृष्टं आ०, ब०।

